# गायत्रीव्याख्या

श्रीतारानाथ तर्कवाचस्पति भट्टाचार्य्य

विरचिता

—००—

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

प्रकाशिता

—※—

कलिकाता नगरे

वीडन् यन्त्रे

मुद्रिता

इं १८७५

# गायत्रीव्याख्या ।

अभिवन्द्य जगद्वन्द्यं श्रीताराना थशर्म्मणा
बुभुत्सु प्रतिपत्त्यर्थं गायत्र्यर्थः प्रदर्श्यते ।

इह खलु संसारे सुखं दुःखनिवृत्तिश्च परमं प्रयोजनम् । तत्रापि दुःखनिवृत्त्यपेक्षया सुखमेवेष्यमाणतरं लक्ष्यते तथाहि एतद्व्याभीष्टसाधनार्थमेव सर्वएव लोका तत्साधनोपायवस्तूनां सम्पादनादिविषये श्रमायासादिजन्यक्लेशराशीन् सहन्ते । सहन्ते च सुखसाधनसम्पादनसमयेऽवान्तरदुःखराशीन् । यथा मत्स्यभोजने कण्टकवेधम्, पाके श्रमम्, भोजने तदाहरणजन्यशारीरिकक्लेशराशीन् । तत्र तत्र जायमानानपि क्लेशानगणयित्वैव तत्र तत्र प्रवर्त्तन्ते । तथा—जायमानेष्वपि क्लेशेषु तत्तत्कर्म्मभ्यः केऽपि न निवर्त्तन्ते । प्रत्युत तत्र प्रयतन्ते एव । अतो दुःखोत्पत्तिभिया वैषयिकसुखसम्पादनाय नैव तत्तत्कर्म्मभ्यो विरमन्तीति लोकसिद्धम् । ततश्च, सर्व्वं वैषयिकसुखं दुःखानुविद्धमपि न कैश्चिदपि हातुमिच्छति । सति च सुखस्येष्यमाणत्वे सर्व्वएव जनाः कालान्तरभाविसुखाभिलाषेण सुखसाधनवस्तुसम्पादनार्थं प्रथमतो बहुविधं क्लेशं सहन्ते । यथा, कृषीवला हेमन्त-

काले शस्यलाभप्रत्याशया ग्रीष्मवर्षादिकाले चेत्रकर्षणम्, धान्यादिवपनञ्च कुर्वन्त:, यौवनकाले सुखसन्ततिलाभाशया बाल्यकाले विद्याशिल्पकलाकलापादिकमभ्यस्यन्तो बहुविधं क्लेशसञ्चयं सहन्ते ।

किन्तु मानवमात्रस्यैव ईदृशः स्वभावो दृश्यते यदल्पसुखेन न केऽपि परितृप्यन्ति। वरं क्रमशः पूर्व्वप्राप्तसुखापेक्षयाधिकमेव सुखं कामयन्ते । यथा, वृष्टिसलिलैर्देहसन्तापनिवारणरूपे स्नानफले विद्यमानेऽपि विशिष्टसन्तापनिवारणाय दूरवर्त्तिनीमपि नदीं वापीञ्चावगाहितुं प्रायेण सर्व्वएव प्रवर्त्तन्ते, प्रवर्त्तन्ते च प्रात्यहिकान्नभोजनजन्यसुखे जायमानेऽपि मिष्टान्नभोजनजन्यसुखसम्पादनाय । अनेन विश्वजनीनप्रवृत्तिदर्शनेन ज्ञायते यत् आत्मनि उत्कृष्टसुखधारा उत्तरोत्तराऽधिकास्त्विति सर्व्वेषामेवैवं कामना ।

तथाच विषयवस्तुसम्बन्धसमयएव वैषयिकसुखमुत्पद्यते, विषयवस्तुसम्बन्धविगमसमये च व्यपैति । विषयसम्बन्धश्च न पुनश्चिरस्थायी । इत्थं वैषयिकसुखमपि क्षणविनश्वरम् विषयज्ञानसमकालोत्पन्नत्वात्। सुतरामस्य वैषयिकसुखस्य विगमकाले मनस्तापादि दुःखं जायते । विशेषत:, एकविधसुखानुभवोत्तरसमयेऽन्यविधशारीरिकपीड़ादि मानसिकेर्ष्यादिकञ्च दुःखं प्रायशः प्राणिनां भवत्येव । सुखकाले च तादृशदुःखान्तरनिवारणाय उपायाऽदर्शनात् समस्तलोका उद्वेजिता भवन्ति । नाद्यापि तादृशो लौकिक उपायः कश्चिदुद्भावित:, येनोपायेन वैषयिकसुखं चिर-

शयि कर्त्तुं शक्यते, तत्समये वान्यादृशं दुःखं नोत्पद्यते इति।

अतश्चिरस्थायिनीं दुःखाननुविद्धां सुखसन्ततिमभिलषतो जनस्य विशेषतो देहान्तरभाविताद्दशसुखधाराभिलाषिणश्च न कश्चित् लौकिक उपायो दृश्यते। तथाहि यथा, बाल्याभ्यस्तविद्यादिभिः यौवने, जरादिकाले च अस्मिन्नेव देहे सुखलाभो भवति नतु देहान्तरे, एवमिह देहे समुपार्ज्जितेन येन लौकिकोपायेन देहान्तरे सुखलाभो भवेदेवंविध उपायो न कश्चिद्दृश्यते। अपरञ्च, यथा दण्ड-मृत्तिका-सलिलसूत्र-सामिग्रीभ्यो घटः, तुरीतन्त्वादिभ्यः पटः, भोजनेन तृप्तिः, तथा सुगन्धिघ्राणे सुखञ्च भवतीति तत्तद्वस्तूनां कार्य्यकारणभावः प्रत्यक्षसिद्धः। चिरस्थायि दुःखरहितं देहान्तरभावि सुखं प्रति तु न किञ्चित् कारणं प्रत्यक्षेणोपलभ्यते। कारणता-ग्राहकयोः (तत्सत्त्वे तत्सत्त्वमन्वयस्तदसत्त्वे तदसत्त्वं व्यतिरेकः) अन्वयव्यतिरेकयोस्तत्रासत्त्वात् निश्चितकारणभावमेव वस्तु कार्य्योत्पादनाय व्यापार्य्यमाणं दृश्यते। न खलु क्वापि लौकिकोपाये तादृशसुखान्वयव्यतिरेकौ दृश्येते येन तत्र तादृशसुखकारणताग्रहो भवेत्।

इत्थं प्रत्यक्षप्रमाणेन क्वापि तथाविधसुखस्योपायता निश्चयाभावे तत्रानुमानप्रवृत्तिरपि न भवति तथाहि येन पदार्थेन यः पदार्थोऽनुमीयते तयोर्द्वयोः पदार्थयोरनेकस्मिन् स्थले सहचारावलोकनेनैव व्याप्तिग्रहे सति, गृहीतव्याप्तिकेन हेतुना साध्यमनुमीयते यथा अनेकत्र सहचार

दर्शनात् गृहीतव्याप्तिकधूमादग्निः । प्रकृते च तथाविध-सुखस्य तत्साधनेन कुत्रापि न सहचारोदृश्यते येन व्याप्ति गृह्येत अतोव्याप्तिनिश्चयाभावान्नानुमानप्रवृत्तिः ।

अतएव चिरस्थायिनोदुःखाननुविद्धस्य सुखसञ्चयस्य, विशेषतः, देहान्तरे भाविनः सुखसञ्चयस्य सम्पादनाय न कश्चन लौकिक उपायोऽध्यवसीयते । परिशेषात् अलौकिकोपायस्यावलम्बनीयत्वे कस्य वस्तुनः कीदृक् कारणम् तस्य कारणत्वं वा केन मानेन गृह्यते, प्रमाणमन्तरेणैव कारणत्वे स्वीकृते सर्व्वाण्येव वस्तूनि सर्व्वेषामेव वस्तूनां कारणानि स्युः, एवमापत्तिरुत्तिष्ठते । सेयमापत्तिराप्तवचनरूपप्रमाणात् गृहीतकारणभावस्यालौकिकोपायस्यैव तादृशसुखहेतुत्वाङ्गीकारान्निरस्यते ।

आप्तश्च यथार्थज्ञानवान् भ्रमप्रमादादिशून्यो रागद्वेषादिविवर्ज्जितः । तस्योपदेशएवाप्तोपदेशः । तेनैवोपदिष्टेन वाक्येन अलौकिकपदार्थयोः कार्य्यकारणभावो निश्चीयते ।

तत्र सर्व्वनियन्ता सर्व्वशक्तिमान् सर्व्वज्ञः सर्व्वस्रष्टा परमेश्वर एव प्रधानमाप्तः । स एव परमेश्वरः पूर्व्वमचिन्तनीयशक्तिद्वारा विश्वमण्डलं सृष्ट्वा विश्वसंसारस्य मर्य्यादारचार्थे प्रवृत्तिलक्षणं धर्म्ममुपदिश्य प्रथमतः प्राणिनोधर्म्मानुरक्तान् विधाय, परिशेषे निरतिशयानन्दसन्दोह-स्वरूपमुक्तिप्राप्तये निवृत्तिलक्षणमपि धर्म्ममुपादिदेश । तादृशाप्तोपदेशानुसारेणैव प्रवृत्तिलक्षणं धर्म्ममवलम्ब्य संसारयात्रां निर्वाहयन्तः, सर्व्वएव जनाः क्रमशः स्वच्छान्तःकरणाः

निर्द्दोषाः, निर्लोभा निर्म्मलचित्ताश्च भूत्वा परनिर्वृति-साधनं तत्त्वज्ञानं लब्ध्वा परमपदं प्राप्नुवन्ति।

अस्यैव जगत्पातुर्य्यद्यपि तादात्म्यादिसम्बन्धेनैव सर्व्व एव लोकाः समानास्तथापि देशकालपात्रशक्तिभेदात् अधिकारिभेदमुद्दिश्य स धर्म्मविशेषमादिदेश। यो यादृश धर्म्माधिकारी स तादृशधर्म्ममनुतिष्ठन् परमपदं लभते, न पुनः अन्यधर्म्मस्यान्यैरनुष्ठाने तत्र तनुरपि फलोदयः, प्रत्युत तत्रानर्थपरम्परा जायते। यथा शस्यविशेषाणां क्षेत्रविशेष एव फलोदयः, नहि हैमन्तिकधान्यभूमौ इक्षुरुत्पद्यते इक्षुभूमौ वा, हैमन्तिकधान्यम्। प्रत्युत, तथा वैपरीत्येन वपने तत्तद्वीजं निर्वीर्य्यतैव जायते। तथा परमेश्वरोऽपि यादृशमानवक्षेत्रे यादृशं धर्म्मवीजम् उप्यमानं फलोदयाय कल्पते तन्निश्चित्य तादृशमानवक्षेत्रभेदे तादृशं वीजरूपम् कर्म्मभेदं विधातुमुपदिदेश। इत्यधिकारिभेदात् धर्म्मभेदोऽस्तीति गम्यते तेन इतरेणापरधर्म्मानुष्ठाने तदाज्ञातिक्रमो भवति। तदाज्ञामतिक्रम्य कर्म्मणि कृते च तदवमानना कृता स्यात् ततश्च तज्जन्ययन्त्रणापि भुज्यते।

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते।
आज्ञाच्छेदी मम द्वेषी नरकं प्रतिपद्यते॥" वाराहम्

"यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्च्य सिद्धिं विन्दति मानवः॥"

"स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः।"

"चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः॥"

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ !।
ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम्॥" गीता।

एभिः शास्त्रैर्युक्तिभिश्च अधिकारिभेदेन धर्म्मभेदः इति सिद्धम्। एतेषां धर्म्माणाञ्चानुष्ठानोद्देश्यं परमेश्वराज्ञापालनमेव। ब्राह्मणादिभिः स्वस्वकर्म्मानुष्ठानेन आज्ञापालनेन सम्मानितश्च परमेश्वरोऽभीष्टफलस्तेभ्यो यच्छति।

स च एकोऽपि उपासकानां सिद्ध्यर्थं नानारूपतां प्राप्नोऽपि यस्य यस्य यत्र यत्र श्रद्धा, तत्तदुपासनयैव तस्य तस्य फलविशेषं प्रयच्छति। तदप्युक्तं गीतायाम्।

"यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमीहते।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥"
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्॥"

ईश्वराराधने च सर्व्वेषामधिकारः तदुक्तं तत्रैव।

"मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥"

इत्थं सर्व्वेषां वर्णानां परमेश्वरस्योपासनैव मुख्योद्देश्या। एवमधिकारिभेदेन धर्म्मभेदे साधिते स्वस्वधर्म्मशास्त्रे यदितरेषां धर्म्माणां निन्दा श्रूयते, तस्येदमेव मुख्योद्देश्यं, यत् स्वस्वशास्त्रानुसारिणि धर्म्मे तदधिकारिणः प्रवर्त्तन्तां, एवमितरेऽन्यधर्म्मे प्रवर्त्तन्तामिति तत्राऽपरधर्म्मावलम्बने स्वप्रतिपाल्यधर्म्माकरणे च मङ्गलं मास्त्विदमेव मुख्यं शास्त्रोद्देश्यम्।

अस्मज्जातिपक्षे तु वेदशास्त्रमेव प्रधानाप्तोपदेशः, तदेव शास्त्रमेवालम्ब्य तदनुसारेणैव कर्म्म कर्त्तव्यम् ॥

वेदशास्त्रं च दुरूहं तथा दुष्प्रापञ्चेति विविच्य परमकारुणिकाः पूर्व्वपूर्व्व महर्षिगणाः, वेदार्थाननुभूय वेदसमानार्थकं सुगमञ्च स्मृत्यादिशास्त्रं व्यरचयन्। सर्व्वाणि च वेदशास्त्राणि दुर्लभानि—विशेषतस्तानि प्राप्तान्यपि तेषां दुर्बोधत्वात् वेदार्थज्ञानेऽस्माकं महान् क्लेश आसीत्। पूर्व्वतना महर्षयस्तु वेदानुसारिधर्म्मशास्त्रादिनिर्म्माणेन अस्माकं क्लेशमपाचक्रुः। अतस्तेषामुपदेशा अपि आप्तोपदेशा इत्युच्यन्ते ॥

वेदशास्त्रन्तु अलौकिकपदार्थबोधनार्थमेव प्रवृत्तम्। तत्तु वेदलक्षणदर्शनेनैव शास्त्रनिर्म्मातारः स्पष्टीचक्रुः।

यदाह ऋगवेदभाष्ये माधवाचार्य्यः ॥

"अनधिगताबाधितार्थबोधकः शब्दो वेदः"।

अग्रे (१२ पृ०) प्रदर्शनीयेन ऋगवेदभाष्यधृतस्मृतिवाक्येनापीदमेव तल्लक्षणं प्रतीयते। शब्दचिन्तामणिग्रन्थेऽप्याह।

"शब्दतदुपजीवि-प्रमाणातिरिक्त-प्रमाणजन्य-प्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्।

सुतरां, ये तत्पदार्थबोधनार्थं प्रवृत्तास्तेषां तत्पदार्थबोधनैव मुख्योद्देश्यः। अतएव वेदादिशास्त्रमलौकिकपदार्थबोधकम्। अस्मज्जातीयानां पक्षे तु वेदादिशास्त्रमेव परं प्रमाणम्। यथा वेदशास्त्रे तथा वेदमूलकस्मृत्यादिशास्त्रेऽपि नानाऽलौकिकपदार्थाः कथ्यन्ते। तन्मध्ये, धर्म्म,

एवातिप्रधानम्, सएव पुरुषस्य चिरस्थायिनो दुःखरहित सुखसञ्चयस्य कारणमतो धर्म्म एव विशिष्य प्रदृश्यते ॥

"धर्म्मो विश्वस्य जगतः प्रतिष्ठा धर्म्मेण पापं नुदति
धर्म्मे सर्व्वं प्रतिष्ठितं तस्माद्धर्म्मं परमं वदन्ति" ॥ श्रुतिः

"विद्या वित्तं वपुः शौर्य्यं कुले जन्म विरोगिता ।
संसारोच्छित्तिहेतुश्च धर्म्मादेव प्रवर्त्तते ॥
शब्दे स्पर्शे च रूपे च रसे गन्धे च भारत ! ।
प्रभुत्वं लभते जन्तुर्धर्म्मस्यैतत् फलं मतम् ॥
अग्र्यं सिद्धिं परामिच्छन् धर्म्ममेव समाचरेत् ।
न हि धर्म्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥
धर्म्मं चिन्तयमानोऽपि यदि प्राणैर्वियुज्यते ।
ततः स्वर्गमवाप्नोति धर्म्मस्यैतत् फलं विदुः ॥
येऽर्थां धर्म्मेण ते सत्या येऽधर्म्मेण धिगस्तु तान् ।
धर्म्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥
धर्म्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च शान्ताश्च धनाढ्या धर्म्मचारिणः ॥
धर्म्मः प्रज्ञां वर्द्धयति क्रियमाणः पुनः पुनः ।
वृद्धप्रज्ञस्ततो नित्यं पुण्यमारभते परम्" ॥

महाभारते नानास्थाने ।

"धर्म्मात् सुखं च ज्ञानञ्च धर्म्मादुभयमाप्नुयात् ।
तस्मात् सर्व्वं परित्यज्य विद्वान् धर्म्मं समाचरेत् ॥
धर्म्मात् सञ्जायते ह्यर्थो धर्म्मात् कामोऽभिजायते ।

धर्म्मादेव परं ब्रह्म तस्माद्धर्म्मं समाश्रयेत्" ॥

स्कन्दपुराणे ।

व्यास: । "कामार्थौ लिप्समानस्तु धर्म्ममेवादितश्चरेत् ।
न हि धर्म्मादपैत्यर्थ: कामो वापि कदाचन ॥
न हि धर्म्माद्भवेत् किञ्चिद्दु:प्रापमिति मे मति: ॥
निपानमिव मण्डूका: सर: पूर्णमिवाण्डजा: ।
धर्म्मकर्म्माणमायान्ति विवशा: सर्व्वसम्पद: ॥"
"धर्म्माद्राज्यं धनं सौख्यमधर्म्माद्दु:खसम्भव: ।
तस्माद्धर्म्मं सुखार्थाय कुर्य्यात् पापञ्च वर्ज्जयेत् ॥
लोकद्वयेऽपि यत् सौख्यं तद्धर्म्मात् प्राप्यते यत: ॥
धर्म्ममेकमत: कुर्य्यात् सर्व्वकामार्थसिद्धये ॥
य: कर्म्म धर्म्मसंयुक्तं मनसाऽपि विचिन्तयेत् ।
स वर्द्धते यथेच्छात: शुक्लपक्षे इवोडुराट् ॥
दीर्घकालेन तपसा सेवितेन तपोधना: ! ।
धर्म्मनिर्द्धूतपापानां संसिध्यन्ति मनोरथा: ॥
धर्म्मवृद्धौ च वर्द्धन्ते सर्व्वभूतानि सर्वदा ।
तस्मिन् ह्रसति हीयन्ते तस्माद्धर्म्मं विवर्द्धयेत् ॥

स्थानान्तरे स्कन्दपुराणम् ।

इत्थं सर्व्वेषां वर्णानां धर्म्म: प्रधानतयाऽऽश्रयणीय इति निरूपिते, कस्य वर्णस्य को धर्म्म इति निरूपणीये ब्राह्मणानामध्ययनमेव परमो धर्म्म: ।

"अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्म्माण्यग्रजन्मन: ॥
षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका: ।

याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥" मनुः

अनेन ब्राह्मणानामध्ययनमेव प्रधानधर्म्मः तन्मध्ये वेदाध्ययनमेवातिश्रेयस्करम् ।

"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यः" श्रुतिः ।

"स्वाध्यायोऽध्येतव्य" इति श्रुतिः ।

"तपोविशेषैर्विविधैर्व्रतैश्च विधिनोदितैः ।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥

वेदानेव सदाभ्यस्येत्तपस्तप्यन् द्विजोत्तमः ।

वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते" ॥ मनुः ।

"यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्म्मणाम् ।

वेद एव द्विजातीनां सुनिःश्रेयस्करः परः ॥"

योगियाज्ञवल्क्यः

"वेद एव सदाभ्यस्यो वेदश्चक्षुः सनातनम् ।

भूतं भव्यं भविष्यञ्च सर्व्वं वेदात् प्रसिध्यति" ॥ स एव व्यासः । "धर्म्मशुद्धिमभीप्सुनं वेदादन्यद्धि इष्यते ।

धर्म्मस्य कारणं शुद्धं मिश्रमन्यत् प्रकीर्त्तितम् ।

अतः स परमो धर्म्मो यो वेदादवगम्यते" ॥

मनुः । "इहैव स नखाग्रेभ्यः परमं तप्यते तपः ।

यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्" ।

यमः । "तपस्तप्यति योऽरण्ये मुनिर्मूलफलाशनः ।

ऋचमेकाञ्च योऽधीते तद्वत्तेन फलं लभेत्" ॥

दक्षः । "वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा" ॥
यमः । "न शूद्रो वृषलो नाम वेदो हि वृष उच्यते ।
यस्य विप्रस्य तेनालं स वै वृषल उच्यते ।
तस्माद्वृषलभीतेन ब्राह्मणेन प्रयत्नतः ।
एकदेशोऽप्यध्येतव्यो यदि सर्व्वो न शक्यते" ।
ब्राह्मण्योपयुक्तस्नानसन्ध्यादिरूपो भाग एव एकदेशशब्देन गृह्यते इति ब्राह्मणसर्वस्वे हलायुधः ।
मनुः । "यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥
यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥
व्यासः । "ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्म्मवित् ।
न त्वेव चतुरो वेदान् अन्यायेन कदाचन" ॥
तेन द्विजातीनां विशेषतो ब्राह्मणानामर्थज्ञानसहितं वेदाध्ययनमवश्यं कर्त्तव्यम् तदाह ऋग्वेदभाष्ये मन्त्रद्वयम् ।
"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"
"यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" ॥

एतयोर्भाष्यकृता माधवाचार्य्येण कृता व्याख्या यथा,

"यस्तु वेदमधीत्यार्थं न विजानाति सोऽयं पुमान् भारमेव हरति धारयति। स्थाणुरिति दृष्टान्तः छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते स च यथा इन्धनार्थमेवोपयुज्यते न तु पुष्पफलार्थं तथा केवलपाठकस्य व्रात्यत्वं न भवतीत्येतावदेव, नह्यनुष्ठानं स्वर्गादिसिद्धिर्वास्ति। किलेत्यनेन लोकप्रसिद्धिर्द्योत्यते लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽप्यधिका विदुषि दृश्यते। किञ्च यत् वेदवाक्यमाचार्य्याद्गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनः पुनरुच्चार्य्यते तत् कदाचिदपि न ज्वलति न प्रकाशयति यथाग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत्। तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात्। अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनं तथा चोक्तम्।

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदतेति" ॥

अतो मुख्यवेदत्वसिद्धये ज्ञातव्य एव तदर्थः" इति।

व्यासः। "वेदस्याध्ययनं कार्य्यं धर्म्मशास्त्रस्य वापि यत्।
अजानतार्थं तत् सर्वं तुषाणां कण्डनं यथा ॥
यथा पशुर्भारवाही न तस्य भजते फलम्।
द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥
पाठमात्ररतान्नित्यं द्विजातींस्त्वार्थवर्ज्जितान्।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्च्चयेत् ॥

श्रुतहीनमधीतञ्च नेह नामुत्र तद्भवेत् ।
श्रुतन्तु केवलमपि समुद्धाराय कल्पते ॥
योऽधीते नार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ।
भारवाही च भृतकः केवलं क्लेशभाक् भवेत् ॥
तस्मादर्थपरिज्ञाने यत्नः कार्यो विजानता ।
ज्ञानं कर्म्म च संयुक्तं मुक्त्यर्थं कथितं यथा ।
अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलम् ।
अधीत्य यत् किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गं लोकमवाप्नोति धर्म्मानुष्ठानविद्द्विजः ॥
समुचितं स्तोकमपि श्रुताधीतं विशिष्यते ।
चतुर्णामपि वेदानां केवलाध्ययनाद्द्विज ! ॥"

मनुः । "वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मचर्य्याय कल्पते ॥"

एभिः शास्त्रैरर्थज्ञानसहितवेदाध्ययनं द्विजातीनां परमश्रेयस्करमित्यवगतम् । तदशक्तौ स्नानसन्ध्यादिनित्य-नैमित्तिकादिकर्म्मोपयोगिमन्त्राणां सार्थज्ञानाध्ययनमवश्यं कर्त्तव्यं तद्विना ब्राह्मण्यानुष्ठानासम्भवात् । तत्रापि सर्वेषु मन्त्रेषु सर्व्ववेदसाररूपा गायत्र्येव सार्थाऽधेया तस्याश्च वेदसारता शास्त्रे दर्शिता यथा ।

मनुः । "अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ॥"

मनुयमवृहद्वशिष्ठाः ।

"ओंकारपूर्व्विकास्तिस्रो महाव्याहृतयस्तथा ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥"

जपेदित्यनुक्तेश्च छन्दोगपरिशिष्टम् ।

"सर्व्वेषां वेदानां गुह्योपनिषत्सारभूतां ततो गायत्रीम् ।"

योगियाज्ञवल्क्यः ।

"गायत्रीञ्चैव वेदांश्च तुलया समतोलयन् ।
वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्थिता ॥"

स एव । "सारभूतास्तु वेदानां गुह्योपनिषदो मताः ।
ताभ्यः सारस्तु गायत्री तिस्रो व्याहृतयस्तथा ॥"

स एव । "ओंकारपूर्विकास्तिस्रो गायत्रीं यश्च विन्दति ।
चरितब्रह्मचर्य्यश्च स वै श्रोत्रिय उच्यते ॥"

स एव । "एतया ज्ञातया सर्वं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥"

स एव । "एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः ।
अन्यथा शूद्रधर्म्मा स्याद् वेदानामपि पारगः ॥"

स एव । "आम्नात्वा चैव गायत्रीं ब्राह्मण्यादेव हीयते ।
अपवादेन संयुक्तो भवेत् श्रुतिनिदर्शनात् ॥"

कौर्म्मम् । "क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥"

मूर्खस्य सार्थगायत्रीरहितस्येति शुद्धितत्त्वे रघुनन्दनः । गायत्रीरहितस्येत्यन्ये ।

तस्याः सन्ध्यारूपतया उपास्यतापि यथाह,

योगियाज्ञवल्क्यः ।

"या सन्ध्या सैव गायत्री द्विधा भूता व्यवस्थिता ।
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः ॥"

व्यासः । "गायत्री नाम पूर्व्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥
प्रतिग्रहान्नदोषाच्च पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः ॥
सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता ।
जगतः प्रसवितृत्वात् वाग्रूपत्वात् सरस्वती ॥"

ऋष्यशृङ्गः । "सर्व्वात्मना हि या देवी सर्व्वभूतेषु संस्थिता
गायत्री मोक्षहेतुर्वै मोक्षस्थानमलक्षणम् ॥"

कूर्म्मपुराणम् । "गायत्री वेदजननी गायत्री लोकपावनी ।
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ॥"

योगियाज्ञवल्क्यः ।

"गायत्री वेदजननी गायत्री पापनाशिनी ।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥
हस्तत्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोहृदये शुचिः ॥
गायत्रीं निरतं हव्यकव्येषु विनियोजयेत् ।
तस्मिन्न तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥"

स एव । "गायत्र्याः पदमर्द्धन्तु ऋचोऽर्द्धमृच एव वा ।
ब्रह्महत्या सुरापाणं गुरुदाराभिमर्षणम् ॥
यच्चान्यत् दुष्कृतं सर्व्वं पुनातीत्याह वै मनुः ।"

स एव। "यज्ञदानरतो विद्वान् साङ्गवेदस्य पाठकः।
गायत्रीध्यानपूतस्य कलां नार्हति षोड़शीम्॥"

वृहद्विष्णुः। "एतयर्चा विसंयुक्ता काले च क्रियया स्वया।
त्रिप्रवनियमिह्रयोनिर्गर्हणीया तु साधुषु॥"

अग्निपुराणम्। "गायत्रीं जपते यस्तु द्वौ कालौ ब्राह्मणः सदा।
असत्प्रतिग्रहीतापि स याति परमां गतिम्॥"

इत्थं बहुविधशास्त्रे गायत्री सर्वेषां वेदानां सारांशतया सर्वाभीष्टहेतुतया च प्रसिद्धा। यदज्ञाने ब्राह्मण्यहानिर्भवति। सेयं गायत्री वेदत्रयेऽपि समानरूपा अतः बुभुत्सुज्ञानाय गायत्री व्याख्यायते।

तत्र गायत्रीछन्दस्कानि वेदमन्त्राणि समष्टिरूपतया २४ चतुर्विंशत्यक्षराण्यपि प्रत्येकमष्टस्वष्टस्वक्षरेषु एकैकपादत्वकल्पनया त्रिपादरूपतया व्यवह्रियन्ते। तेन पूर्वोक्तमन्वादिशास्त्रेष्वपि गायत्री त्रिपदेति निर्दिष्टा।

इत्थं चरणत्रयेऽपि २४ चतुर्व्विंशत्यक्षराणां सत्त्वेन गायत्रीछन्दस्कतयापीयं गायत्रीत्यभिधीयते।

छन्दःशास्त्रे षड़क्षरपादं छन्दो हि गायत्रीछन्द इत्युच्यते। सर्ववेदेऽपि षड़क्षरयुक्तपादकाबहवोमन्त्राः सन्ति। सर्व्वेऽपि ते गायत्रीरूपतया वक्तुं शक्यन्ते। किन्तु, यथा, "पङ्काज्जायते" इति व्युत्पत्त्या पङ्कजशब्दः पङ्कजनिकर्तृत्वयुक्तस्य पद्मस्यैव बोधकः पङ्कजातानामन्येषां कुमुदादीनामबोधकः, एवं गायत्रीशब्दोऽपि योगरूढ़ामन्त्रभेदस्यैव बोधकः। वस्तुतोऽन्यव्युत्पत्तिमत्त्वेनाप्यस्य मन्त्रभेदबोधकत्वम्। यथाह,

व्यास:। गायन्तं त्रायते यस्मात् गायत्रीयं ततः स्मृता।

सच मन्त्रः। (तत्सवितुर्वरेण्यम्)१ (भर्गोदेवस्य धीमहि)२। (धियोयोनः प्रचोदयात्)३ इत्येवं रूपः।

स्वोपासकत्राणकर्त्तृ ब्रह्मप्रतिपादकतयाऽपि उक्तमन्त्र-विशेष एव गायत्रीरूपतयोच्यते। यद्यपि गायत्र्याः षडक्षर-पादतया चतुर्षु चरणेषु २४ चतुर्विंशत्यक्षरावश्यकत्वं किन्तु, अन्यान्यगायत्रीछन्दस्कानां मन्त्राणामिवास्मिन् २४ चतुर्विंश-त्यक्षराभावस्तथापि (वरेण्यम्) पदस्थं यवर्णमादाय २४ चतुर्विंशतिसंख्या परिपूर्य्यते। यकारोऽपि द्यौः इत्यत्रेव स्वरवर्णरूपतयाऽत्र गृह्यते तत्रापि वृहदारण्यकभाष्ये व्यक्तं भविष्यति॥

अस्याश्च अष्टाक्षरपादत्वेन त्रिपदतया तस्या एकैक-चरणस्य भूम्यादिरूपता, गयनामप्राणत्रातृतया गायत्री शब्दनिरुक्तिश्च वृहदारण्यकब्राह्मणे दर्शिता यथा,

"भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदुहैवास्या एतत् स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद॥ १॥

ऋचो यजूंषि सामानीति अष्टावक्षराणि अष्टाक्षरं वा एकं गायत्र्यै पदमेतदुहैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद॥ २॥

प्राणोऽपानो व्यानः (त्र्यानः) इत्यष्टावक्षराणि अष्टा-क्षरं ह वा एकं गायत्र्यै पदमेतदुहैवास्या एतत् स याव-दिदं प्राणिति, तद्ध जयति योऽस्या एतदेवं पदं वेद॥ ३॥

अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृशे इव एष परोरजा इति सर्व्वम् ह्येष रज उपर्य्युपरि तपति एवं ह्येष श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ४ ॥

सैषा गायत्री एतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठितेत्यादि ॥ ५ ॥

तद्वैतत् सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत् प्राणे प्रतिष्ठितमित्यादि। सा हैषा गयांस्तत्रे प्राणा वै गयास्तान् प्राणांस्तत्रे यस्माद्गयांस्तत्रे तस्माद् गायत्री नाम। ६

स यामेवामुमन्वाहैषैव सा, स यस्मा अन्वाह तस्य प्राणांस्त्रायते" ॥ ७ ॥

अस्य शङ्कराचार्य्यकृतं भाष्यम्।

"ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमुक्तमथेदानीं गायत्र्युपाधिविशिष्टस्योपासनं वक्तव्यमित्यारभ्यते सर्व्वच्छन्दसां हि गायत्रीच्छन्दः प्रधानभूतं तत्प्रयोक्तृगयत्राणात् गायत्रीति वक्ष्यति। नचान्येषां छन्दसां प्रयोक्तृप्राणत्राणसामर्थ्यं प्राणात्मभूता सा, सर्व्वछन्दसां चात्मा प्राणः, "प्राणश्च क्षतः त्राणात् क्षत्र"मित्युक्तं प्राणश्च गायत्री तस्मात् तदुपासनमेवं विधित्स्यते द्विजोत्तमत्वहेतुत्वाच्च "गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यं जगत्या वैश्यमिति" द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तं तस्मात् प्रधाना गायत्री ब्राह्मणाद्यर्था। "यो ब्राह्मणान् अभिवदन्ति स ब्राह्मणः विपापो विरजा विचिकित्सो ब्राह्मणो भवति"

इत्युक्तेन परमपुरुषार्थसम्बन्धं ब्राह्मणस्य दर्शयति तच्च ब्राह्मणत्वं गायत्रीजन्ममूलमतो वक्तव्यं गायत्र्याः सतत्त्वं, गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियते ततस्तन्मूलः परमपुरुषार्थसम्बन्धस्तस्मात् तदुपासनविधानायाह । भूमिः अन्तरिक्षं द्यौः इत्येतानि अष्टौ अक्षराणि, अष्टाक्षरम् अष्टावक्षराणि यस्य तदिदम् अष्टाक्षरं ह्वैप्रसिद्धावद्योतकौ एकं प्रथमं गायत्र्यै, गायत्र्याः पदं यकारेणैवाष्टत्वपूरणम् एतदुह एव एतदेव अस्याः गायत्र्याः पदं पादः प्रथमो भूम्यादिलक्षणः त्रैलोक्यात्माष्टाक्षरत्वसाम्यात् एवम् एतत् त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद तस्यैतत् फलम् स विद्वान् यावत् किञ्चिदेषु त्रिषु लोकेषु जेतव्यं तावत् सर्वं ह जयति योऽस्या एतदेवं पदं वेद (१) ।

तथा ऋचः, यजूंषि, सामानि, इति त्रयीनामाक्षराणि एतान्यप्यष्टावेव तथैवाष्टाक्षरं ह वा एकं गायत्र्याः द्वितीयम् पदं एतदुहैवास्या एतद् यदृग्यजुःसामलक्षणम् अष्टाक्षरत्वसाम्यात् एवं स यावती इयं त्रयी विद्या तया विद्यया यावत् फलजातमाप्यते तावद्ध जयति योऽस्या एतत् गायत्र्यास्त्रैविद्यलक्षणं पदं वेद ॥२

तथा प्राणः, अपानः, (विश्वान्नः) व्यानः एतान्यपि प्राणाद्यभिधानाक्षराणि अष्टौ तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं तावद्ध जयति योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं वेद ॥३

अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यते अभिधेयभूतम्। अस्याः प्रकृतायाः गायत्र्याः एतदेव वक्ष्यमाणं तुरीयं दर्शतं पदम् परोरजा य एष तपति तुरीयमित्यादिवाक्यपदार्थं स्वयमेव व्याचष्टे श्रुतिः। यद्वै चतुर्थं प्रसिद्धं लोके तदिह तुरीयशब्देनाभिधीयते। दर्शतं पदमित्यस्य कोऽर्थः? इत्युच्यते ददृश इव दृश्यत इव हि सूर्य्यमण्डलान्तर्गतः पुरुषः अतो दर्शतं पदमुच्यते। परोरजाः इत्यस्य पदस्य कोऽर्थः? इत्युच्यते सर्व्वम् समस्तम् उ हि एष मण्डलान्तर्गतः पुरुषः, रजः रजोजातं समस्तं लोकमित्यर्थः उपर्य्युपरि आधिपत्यभावेन सर्व्वं लोकं रजोजातं तपति उपर्य्युपरीति वीप्सा सर्व्वलोकाधिपत्यख्यापनार्था। ननु सर्व्वशब्देनैव सिद्धत्वात् वीप्सानर्थिका, नैष दोषः येषामुपरिष्टात् सविता दृश्यते तद्विषय एव सर्व्वशब्दः स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा "ये चामुष्मात् पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानाञ्चेति" श्रुत्यन्तरात् तस्मात् सर्व्वावबोधार्था वीप्सा। यथासौ सविता सर्व्वाधिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति एवं हैष श्रिया यशसा च तपति योऽस्या एतदेवं तुरीयं दर्शतं पदं वेद॥४

सैषा त्रिपदा उक्ता या त्रैलोक्यत्रैविद्यप्राणाद्यात्मिका गायत्री, एतस्मिन् चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता, मूर्त्तामूर्त्तरसत्वादादित्यस्य, रसापाये हि वस्तु नीरसमप्रतिष्ठितं भवति यथा काष्ठादि दग्धसारं तद्वत्। तथा मूर्त्तामूर्त्तात्मकं जगत्। त्रिपदा गायत्री च

आदित्यप्रतिष्ठिता तद्रूपत्वात्। सह त्रिभिः पदैः सद्वि तुरीयं पदं सत्ये प्रतिष्ठितम् इत्यादि ॥५

तच्चि तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितं किं? पुनस्तद्बलमित्याह प्राणो वै बलम् तस्मिन् प्राणे बले, प्रतिष्ठितं सत्यं तथाचोक्तं सूत्रे, 'तदोतञ्च प्रोतञ्चेति' तस्मात् बले सत्यं प्रतिष्ठितमित्यादि ॥६

सैषा गायत्री प्राणः अतः गायत्र्यां जगत् प्रतिष्ठितम् यस्मिन् सर्व्वे देवाः एकीभवन्ति सर्व्वे वेदाः कर्म्माणि फलानि च सैषा गायत्री प्राणरूपा सती जगत आत्मा सा सैषा गयांस्तत्रे त्रातवती, के? पुनर्गयाः, एते प्राणाः वागादयो वै गयाः शब्दकरणात्, तान् तत्रे, सैषा गायत्री तत्र यस्मात् गयांस्तत्रे तस्मादगायत्री नाम गयत्राणात् गायत्रीति प्रथिता। स आचार्य्य उपनीय माणवकमष्टवर्षं यामेव अमूं सावित्रीं सवितृदेवताकाम् अन्वाह पच्छः अर्द्धशः समस्ताञ्च एषैव सा साक्षात् प्राणो जगतः आत्मा माणवकाय समर्पिता इहेदानीं नान्या सः आचार्य्यः यस्मै माणवकाय अन्वाह अनुवक्ति तस्य माणवकस्य गयान् प्राणान् त्रायते नरकादिपतनात्" ॥

छान्दोग्योपनिषदि गायत्र्या अन्यथा निर्व्वचनपूर्व्वकं षडक्षरपादत्वेन चतुश्चरत्वं वागादिरूपेण ध्यातव्यत्वम् स्वप्रतिपाद्यब्रह्मात्मद्वारा सर्वात्मकत्वञ्च दर्शितम्।

"गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च। वाग्वै गायत्री वाग्वा इदं सर्व्वं भूतं गायति च त्रायते च ॥

या वै सा गायत्रीयं वाव सा येयं पृथिवी अस्यां हीदं सर्व्वं भूतं प्रतिष्ठितम् एतामेव नातिशीयते ॥२

या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् अस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३

यद्वैतत् पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयम् अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ॥ ४

सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५

तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतं दिवीति" ।६

अस्य शङ्कराचार्य्यकृतभाष्यम् ।

"यत एवमतिशयफलैषा ब्रह्मविद्या अतः सा प्रकारान्तरेणापि वक्तव्येति गायत्री वा इत्यारभ्यते। गायत्री द्वारेण चोच्यते ब्रह्म, सर्व्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात्। सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात्।" (इत्युपक्रम्य किञ्चिदुक्तोक्तम्) "गायत्रीसारत्वाच्च ब्राह्मणस्य मातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यत् गुरुतरं न प्रतिपद्यते। यथोक्तं ब्रह्मापोति तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात् अतो गायत्रीमुखेनैव ब्रह्मोच्यते।

गायत्री वै इत्यवधारणार्थो वैशब्दः। इदं सर्व्वं भूतं प्राणिजातं यत् किञ्च स्थावरं जङ्गमं वा तत्सर्व्वं

गायत्र्येव। तस्याश्छन्दोमात्राया: सर्व्वभूतत्वमनुपपन्नमिति गायत्री-कारणं वाचं शब्दरूपामापादयति गायत्रीं, वाग्वै गायत्रीति वाग्वा इदं सर्व्वं भूतम् तस्मात् वाक् शब्दरूपा सती सर्वं भूतं गायति च शब्दायते "असौ गौरसावश्व इति" त्रायते च रक्षति "अमुष्मात् मा भैषी: किं? ते भयमुत्थितमित्यादि" सर्व्वतो भयान्निवर्त्त्यमानो वाचा त्रात: स्यात्। यद् वाक्, भूतं गायति च त्रायते च गायत्र्येव तद् गायति च त्रायते च वाचोऽनन्यत्वात् गायत्र्या: गानात् त्राणाच्च गायत्रीत्वम्।१

या वै सैवंलक्षणा सर्व्वभूतरूपा गायत्री इयं वाव सा येयं पृथिवी, कथं? पुनरियं पृथिवी गायत्रीत्युच्यते? सर्व्वभूतसम्बन्धात् कथं सर्व्वभूतसम्बन्ध:? तस्यां पृथिव्यां हि यस्मात् सर्व्वं स्थावरं जङ्गमञ्च भूतं प्रतिष्ठितम् एतामेव पृथिवीं नातिशीयते, नातिवर्त्तते इत्येतत्। यथा गानत्राणाभ्यां भूतसम्बन्धो गायत्र्या एवं भूतप्रतिष्ठानात् भूतसम्बन्धाद्वा पृथिवी अतो गायत्री पृथिवी॥२

या वै सा पृथिवी गायत्रीयं वाव सा इदमेव, तत् किम्? यदिदमस्मिन् पुरुषे कार्य्यकारणसङ्घाते जीवति शरीरं, पार्थिवत्वाच्छरीरस्य कथं शरीरस्य गायत्रीत्वमुच्यते? अस्मिन् हीमे प्राणा: भूतशब्दवाच्या: प्रतिष्ठिता:। अत: पृथिवीवत् भूतशब्दवाच्य-प्राणप्रतिष्ठानात् शरीरं गायत्री एतदेव यस्माच्छरीरं नातिशीयन्ते प्राणा:॥३

यद्वैतत् पुरुषे शरीरं गायत्री वाव तत् यदिदमस्मिन्

अन्तर्मध्ये पुरुषे हृदयं पुण्डरीकाख्यमेतत् गायत्री कथम् ? इत्याह अस्मिन् हीमे प्राणाः प्रतिष्ठिताः अतः शरीरवत् गायत्री हृदयम् एतदेव नातिशीयन्ते "प्राणो हि पिता प्राणो माता" "अहिंसन् सर्वाभूतानीति" श्रुतेः भूतशब्द वाच्याः प्राणाः ॥ ४

सैषा चतुष्पदा षड़क्षरपादच्छन्दोरूपा सती भवति गायत्री षड़्विधा वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड़्विधा भवति। (किञ्चिदतीत्योक्तम्) तदेतस्मिन्नर्थे एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तम् ऋचापि मन्त्रेण अभ्यनूक्तं प्रकाशितम् ॥ ५

तावान् अस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः यावान् चतुष्पाद् षड़्विधस्य ब्रह्मणो विकारः, पादः गायत्रीति व्याख्यातः। अतस्तस्माद्विकारलक्षणात् गायत्र्याख्यात् ततो ज्यायान् महत्तरश्च परमार्थस्वरूपोऽविकारः पुरुषः सर्वपूरणात् पुरि शयनाच्च। तस्यास्य पादः सर्वा सर्वाणि भूतानि तेजोऽबन्नादीनि सस्थावरजङ्गमानि। त्रिपाद् त्रयः पादा अस्य सोऽयं त्रिपाद् अमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मकस्य दिवि," द्योतनवति स्वात्मन्यवस्थित मित्यर्थः" ॥ ६

मातृतोजन्मवतामपि सावित्र्या द्वितीयजन्माधानात् द्विजानां द्विजत्वम्। तज्जन्मैव हि सकलपुरुषार्थहेतुरिति मन्वादिशास्त्रे प्रसिद्धम्। यथा,

मनुः। "आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।

उत्पादयति सावित्री सा सत्या साऽजराऽमरा ॥
तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता चाचार्य्य उच्यते" ॥

यद्यपि परमेश्वरः सर्व्वत्राभिन्नरूपतया वर्त्तमानस्तथापि समुपासने एव विशिष्टफलप्रदः, नान्यथा इदमपि दृष्टान्ततया योगियाज्ञवल्क्येन कथितम् ।

"गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
निःसृतं कर्म्मसंयुक्तं पुनस्तासां तदौषधम् ॥
एवं सहि शरीरस्थः सर्पिर्व्वत् परमेश्वरः ।
विना चोपसनादेव न करोति हितं नृषु" ॥

गायत्र्याश्च स्ववाच्यब्रह्मणा सहाभेदात् प्राशस्त्यमाह व्यासः ।

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित्" ॥

"गायत्रीस्थभर्गपदप्रतिपाद्य ईश्वरः अहंजीवरूपोऽस्मि अहमिति जीवेश्वरयोरहङ्कारप्रतिविम्बितत्वोपाधिरहितेन चिद्रूपेणैक्यं भावयन् उपासीत" इति रघुनन्दनः ।

तत्र सत्स्वपि परमब्रह्मण उपासनाया बहुषूपायेषु गायत्र्येव तदुपासनायाः प्रधानोपायः इति प्राग्दर्शितेषु शास्त्रेषु प्रसिद्धम् । विशेषतः, गायत्र्यर्थः परं ब्रह्म एतदर्थमपि अनेन मन्त्रेणैव उपासना श्रेयस्करी ।

"प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च ।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः ॥
वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।

वाचकेऽपि च विज्ञाते वाच्यएव प्रसीदति"

योगीश्वरवाक्येन "ओङ्कारपूर्विका तिस्र" इति प्रागुक्त वचनेन च गायत्री-व्याहृतिप्रणवानां ब्रह्मवाचकत्वेन तदुपासनाहेतुत्वमुक्तम्। यथा च प्रणवादयः परमब्रह्मवाचकास्तथाग्रे प्रदर्शयिष्यते।

जपकाले च तत्तन्मन्त्राणां ऋषिप्रभृतीनां स्मरणमवश्यं कर्त्तव्यं तदस्मरणे संपूर्णफलाप्राप्तिरनिष्टप्राप्तिश्च। तदपि ब्राह्मणसर्वस्वग्रन्थधृतेन कात्यायनवचनेनोक्तम् यथा

"यो वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण वा यजति याजयति अध्यापयति वा स्थाणुं गच्छति श्वभ्रं वार्च्छत् प्रमीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति अथ मन्त्रे मन्त्रे वेद सर्व्वमायुरेति अयातयामान्यस्य छन्दांसि भवन्ति तस्मान्मन्त्रे मन्त्रे विद्यादिति"।

यजुर्व्वेददीपधृतकात्यायनवाक्यम्।

"द्रष्टार ऋषयः स्मर्त्तारः परमेष्ठ्यादयः, देवता मन्त्रान्तभूता अग्न्यादिका हविर्भाजः स्तुतिभाजो वा, छन्दांसि गायत्र्यादीनि, एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति, जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यन्तराश्च गर्त्तं वापद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति"।

योगियाज्ञवल्क्यः

"यस्तु जानाति तत्त्वेन आर्षं १ छन्दश्च २ दैवतम् ३।

विनियोगं ४ ब्राह्मणं ५ च मन्त्रार्थज्ञानकर्म्म च ॥
एकैकस्या ऋचः सोऽभिवन्द्योऽतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥
पूर्व्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ।
अधिकारी भवेत्तस्य रहस्यादिषु कर्म्मसु ॥
आर्षं १ छन्दश्च २ दैवत्यं ३ विनियोग ४ स्तथैव च
वेदितव्यं प्रयत्नेन ब्राह्मणेन ५ विशेषतः ॥
अविदित्वा तु यः कुर्य्याद्‌याजनाध्यापनं जपम् ।
होममन्तर्ज्जलादीनि तेभ्योऽल्पाल्पफलं लभेत् ॥
अन्तर्जलादिके जप्ये, इतरेषामजानताम् ।
नाधिकारोस्ति मन्त्राणामेवं श्रुतिनिदर्शनम्" ॥

एवमार्षादिज्ञानस्यावश्यकत्वमुक्त्वा आर्षादिस्वरूपमपि तेनोक्तं यथा ।

"येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन च ।
मन्त्रेण तस्य तत्प्रोक्तमृषिभाव १ स्तदात्मकः ॥
छादनाच्छन्द इत्युक्तं वाससी वाथ वा कृते ।
आत्मा तु छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥
आदित्यैर्वसुभीरुद्रैस्तेन छन्द २ इतीरितम् ।
यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता ।
तदाधारं भवेत्तस्य दैवतं ३ देवतोच्यते ॥
पुरा कल्पे समुत्पन्ना मन्त्राः कर्म्मार्थमेव च ।
अनेनैव तु कर्त्तव्यं विनियोगः ४ स उच्यते ॥
निरुक्तं यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनम् ।

प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं ५, अभिधीयते” ॥

उपक्रमे ब्राह्मणेन इत्यत्र सहार्थे तृतीया न कर्त्तरि तेन ब्राह्मणेन मन्त्रेतरवेदभागरूपेण उक्तलक्षणमन्त्रार्थस्तुत्यादिलक्षणरूपेण सह आर्षादिचतुष्टयं तेन पञ्चकमित्यर्थः ।

“एवं पञ्चविधं प्रोक्तं जप्यकालेष्वनुस्मरेत् ।

होमे वा मार्ज्जने यागे स्वाध्याये याजने तथा” ॥

पञ्चविधमित्युक्त्या च ब्राह्मणसहितानामेवार्षादीनां चतुर्णां जपकालेऽनुस्मर्त्तव्यता तेनैव स्पष्टमुक्ता ।

एभिर्वचनैर्ऋष्यादिज्ञानावश्यकत्वं तत्रायं भेदः, यैर्यैर्मन्त्रैर्यानियानि कर्म्माणि क्रियन्ते, तत्कर्म्मकरणेभ्यः प्राक् सत्यपि कदाचित् ऋष्यादिज्ञाने जातेऽपि कर्म्मकाले तत्तत् स्मृत्वैव जपादेः कर्त्तव्यत्वम् । ततश्च ऋष्यादिज्ञाने कदाचिज्जाते सत्यप्यधिकारिता-सम्पादनाय कर्म्मारम्भसमये तत्स्मरणावश्यकत्वम् “जपकालेऽनुस्मरेदिति वाक्ये ऋष्यादिस्मरणस्य तत्तत्कर्म्मकाले कर्त्तव्यतायाः प्रतीतेः । इत्थं च प्रत्येककर्म्मणि तदावृत्तिरावश्यकी किन्तु, शतसहस्रादिसंख्यके जपकर्म्मणि सकृदेवादौ आर्षादिकं स्मर्त्तव्यं न प्रत्येकमन्त्रमावर्त्त्यम् शतसहस्रादिजपरूपस्यैव तत्रैककर्म्मत्वात् । तथैव कात्यायनादिभिरुक्तम् ।

यथा यजुर्वेददीपे कात्यायनवाक्यम् ।

“कर्म्मारम्भे मन्त्राणां देवता वेदितव्येति” ।

व्यासः, प्रणवस्य ऋष्यादिकमभिधाय

“एवमार्षादिकं स्मृत्वा ततओङ्कारमभ्यसेत्”

इत्थम् ऋष्यादिपञ्चकस्य मन्त्रमात्रेषु स्मरणावश्यकत्वे गायत्रीमन्त्रस्यापि तत्पञ्चकमावश्यकं तच्च क्रमेण दृश्यते ।

तत्र योगियाज्ञवल्क्यः ।

"सविता देवता तस्या मुखमग्निस्तदित्युत ।

विश्वामित्र ऋषिश्छन्दो गायत्री तु विधीयते ॥

विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः ।

विनियोगोपनयने प्राणायामे जपे तथा" ॥

इत्थं ऋष्यादिपञ्चकमध्ये चतुष्कमिह स्वपदेन प्रतिपादितम् । अवशिष्टं ब्राह्मणरूपमेकाङ्गं नात्र दर्शितम । किन्तु वृहदारण्यकवाक्यं छान्दोग्यवाक्यं च यत् पूर्वं प्रदर्शितं तदेव ब्राह्मणवाक्यमिह स्मर्तव्यम् । योगिवल्क्योक्तब्राह्मणलक्षणस्य तयोरेव वाक्ययोः सत्त्वात् ।

गायत्र्या २४ चतुर्विंशत्यक्षराणां यथा भावना कार्या, तत्र ब्राह्मणसर्व्वस्वे विष्णुधर्म्मोत्तरे दर्शितं यथा ।

"कर्म्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च ।

पञ्च बुद्धीन्द्रियार्थाश्च भूतानां चैव पञ्चकम् ॥

मनोवुद्धिस्तथैवात्मा अव्यक्तञ्च यदुत्तमम् ।

चतुर्व्विंशतिरेतानि गायत्र्या अक्षराणि च ।

प्रणवं पुरुषं विद्धि सर्वगं पञ्चविंशकम् " ।

अनेन पञ्चविंशतितत्त्वरूपतया सप्रणवगायत्र्यक्षराणां ध्येयतोक्ता ।

तत्र प्रत्यक्षरं देवताभेदमाह योगियाज्ञवल्क्यः ।

"अक्षराणान्तु दैवत्यं सम्प्रवक्ष्याम्यतःपरम् ।

आग्नेयं (तत्) प्रथमं ज्ञेयं वायव्यञ्च (स) द्वितीयकम्।
तृतीयं (वि) सूर्य्यदैवत्यं चतुर्थं (तुः) वैद्युतं तथा।
पञ्चमं (व) यमदैवत्यं वारुणं (रे) षष्ठमुच्यते।
वार्हस्पत्यं सप्तमन्तु (ण्) पार्ज्जन्यमष्टमं (यम्) विदुः।
ऐन्द्रं तु नवमं(भ)ज्ञेयं गान्धर्व्वं दशमं (र्गः) तथा।
पौष्णमेकादशं (दे) प्रोक्तं मैत्रावरुणं द्वादशम् (व)।
त्वाष्ट्रं त्रयोदशं (स्य) ज्ञेयं वासवन्तु चतुर्द्दशम् (धी)।
मारुतं पञ्चदशकं (म) सौम्यं षोड़शकं (हि) स्मृतम्।
सप्तदशं (धि) त्वाङ्गिरसं वैश्वदेवमतःपरम् (यः)।
आश्विनञ्चैकोनविंशं (यः) प्राजापत्यन्तु विंशकम् (नः)
सर्व्वदेवमयं प्रोक्तमेकविंश(प्र)मतःपरम्।
रौद्रं द्वाविंशकं(चो)प्रोक्तम् त्रयोविंशन्तु (दं) ब्राह्मकम्।
वैष्णवन्तु (यात्) चतुर्व्विंशमेता ह्यक्षरदेवताः।
जप्यकाले तु संस्मृत्य तासां सायुज्यतां व्रजेत्"॥

इत्थं गायत्री जपाङ्गमुक्त्वा सम्प्रति तदर्थः प्रदर्श्यते।

तत् सवितुः वरेण्यम् भर्गः देवस्य धीमहि। धियः, यः, नः, प्रचोदयात्। इत्येवं तत्र दश पदानि।

तत्रादौ ऋग्वेदभाष्यकृन्माधवाचार्य्यसम्मतार्थो दर्श्यते।

"यः सविता देवो नोऽस्माकं धियः कर्म्माणि, धर्म्मादिविषया वा बुद्धीः प्रचोदयात् प्रेरयति तत्तस्य देवस्य सवितुः सर्व्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च संभजनीयं भर्गोऽविद्यातत्कार्य्ययोर्भर्ज्जनाद्भर्गः स्वयंज्योतिः परब्रह्मा-

त्मकं तेजो धीमहि तयं ध्यायेम। यद्वा तदिति भर्गोविशेषणम्। सवितुर्देवस्य तत्तादृशं भर्गो धीमहि किं? तदित्यपेक्षायामाह य इति लिङ्गव्यत्ययः। यद्भर्गो नोधियः प्रचोदयात्। तद्ध्यायेमेति समन्वयः। यद्वा यः सविता सूर्यो धियः कर्म्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य सूर्यस्य तत् सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्व्वैः संभजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयाम। यद्वा भर्गःशब्देनान्नमभिधीयते। यः सविता देवो नो धियः प्रचोदयति तस्य प्रसादादन्नादिलक्षणं फलं धीमहि धारयाम तस्याधारभूता भवेमेत्यर्थः। भर्गःशब्दस्यान्नपरत्वे धीशब्दस्य कर्म्मपरत्वे चाथर्वणम्।

"वेदांश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः। कर्म्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयन्त् सविता याभिरेतीति"। "गो० ब्रा० १ ३२॥"

ऋग्वेदभाष्ये माधवाचार्य्यः, भर्गःशब्दं असुन्प्रत्ययान्तं सान्तं निर्दिदेश। अग्रे वक्ष्यमाणयोगियाज्ञवल्क्यवचने च घञन्तत्वेनादन्तं निरदिक्षदिति विशेषः। यदि वाऽसुनन्तो यदि वा घञन्त उभयापि नित्त्वात् ञित्त्वाद्वा आद्युदात्ततेति न स्वरे भेदः।

योगियाज्ञवल्क्यप्रदर्शितया रीत्या ब्राह्मण-सर्वस्वे गायत्र्यर्थो यथोक्तस्तथात्र प्रदर्श्यते।

"तत्तस्य भर्गं तेजो धीमहि चिन्तयामः। अत्र यद्यपि

तमिति पदं भर्गविशेषणं नास्ति तथापि यद्इति यच्छब्द-प्रयोगादेव तमिति तच्छब्दो लभ्यते।

तथाच योगियाज्ञवल्क्यः।

"तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः"॥

किम्भूतस्य? तस्य, सवितुः सर्व्वभूतानां प्रसवितुरित्यर्थः।
तथाच योगियाज्ञवल्क्यः।

"सविता सर्व्वभूतानां सर्व्वभावान् प्रसूयते।
सवनात् प्रेरणाच्चैव सविता तेन चोच्यते"॥

पुनः किम्भूतस्य? देवस्य दीप्तिक्रीड़ायुक्तस्य।

तयाच योगियाज्ञवल्क्यः।

"दीप्यते क्रीड़ते यस्माद्रोचते द्योतते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयते सर्व्वदेवतैः"॥

किम्भूतं? यो भर्गो नोऽस्माकं धियोबुद्धीः प्रचोदयात् प्रेरयति धर्म्मार्थकाममोक्षेषु अस्माकं बुद्धीः यो भर्गो नियोजयतीत्यर्थः। तथाच योगियाज्ञवल्क्यः।

"चिन्तयामो वयं भर्गं धियोयोनः प्रचोदयात्।
धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः"॥

'तदिह भर्गशब्देन बहुविधात्मयुक्तः 'सवितृमण्डलमध्यगत आदित्यदेवतास्वरूपः पुरुष उच्यते।

तथाच योगियाज्ञवल्क्यः।

"भृजिः पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ॥
भ्राजते दीप्यते यस्मात् जगदन्ते हरत्यपि।

कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ।
भ्राजते तत्स्वरूपेण तस्माद्भर्गः सउच्यते" ॥
तथा, "भेति भासयते लोकान् रेति रञ्जयते प्रजाः ॥
गइत्यागच्छतेऽजस्रं भरगो भर्गउच्यते" ॥

अयमेव तु भर्गो बहिराकाशे सूर्य्यमण्डलान्तःस्थोऽपि सकलप्राणिनां हृदयमध्ये जीवभूतः प्रतिवसति ।

तथाच योगियाज्ञवल्क्यः ।

"आदित्यान्तर्गतं यच्च ज्योतिषां ज्योतिरुत्तमम् ।
हृदये सर्व्वभूतानां जीवभूतः स तिष्ठति" ॥
तथा, "हृद्व्योम्नि तपति ह्येष बाह्ये सूर्य्यस्य चान्तरे ।
अग्नौ वा धूमकेतौ च ज्योतिश्चित्रकरञ्च यत् ॥
हृद्याकाशे च यो जीवः साधकैरुपवर्ण्यते ।
स एवादित्यरूपेण बहिर्नभसि राजते" ॥

अत्र यद्यपि प्राणिनां हृदये जीवरूपतया यएव भर्गस्तिष्ठति सएवाकाशे आदित्यमध्ये पुरुषरूपतया विद्यते । अतो अनयोर्भेदो नास्त्येव तथापि "धियोयोनः प्रचोदयात्," प्राणिनां बुद्धेः प्रेरकत्वात् यो हृदयवर्त्ती सएव चिन्तनीयः । अयन्तु विशेषः सूर्य्यमण्डलमध्यवर्त्तिभर्गेण सह एकीभूतश्चिन्तनीयः । पुनः किम्भूतं ? भर्गं वरेण्यं वरणीयं प्रार्थनीयं जन्ममृत्युदुःखादिनाशाय ध्यानेनोपासनीयमित्यर्थः । तथाच योगियाज्ञवल्क्यः ।

"वरेण्यं वरणीयञ्च जन्मसंसारभीरुभिः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥

जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ।
ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्य्यमण्डले" ॥

एवं गायत्रीमन्त्रस्यार्थमुक्त्वा व्याहृतियुक्ततयैव तस्य जप्यतया भर्गसामानाधिकरण्येन तदर्थमाह तत्रैव । पुनः किम्भूतः ? सः भर्गः, भूर्भुवःस्वरिति भूर्लोकान्तरिक्षलोकस्वर्गलोकात्मस्वरूपोऽपि स एव देवतात्मकः भर्ग इत्यर्थः ।

एवमेव भर्गाख्यं परमं ज्योतिः प्राणिव्यूहानां हृदये यथावतिष्ठते तद् विष्णुधर्म्मोत्तरेण योगियाज्ञवल्क्येनाप्युक्तम् ।

"ईश्वरं पुरुषाख्यन्तु सत्यधर्म्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वा त्वमृतमृच्छति ॥
रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्यं सत्यमध्ये स्थितोऽच्युतः ।
अङ्गुष्ठमात्रः पुरुषः पूर्व्वमेव मयेरितः ।
शङ्करेण तथा दृष्टः प्रभवः सर्व्वतेजसाम् ।
स विष्णुर्भुवनाधारो यस्येदं सकलं जगत्" ।

तथाच व्याहृतियुक्तगायत्र्या अयं वाक्यार्थः ।

सवितुर्द्देवस्य भर्गाख्यं परब्रह्मस्वरूपतेजश्चिन्तनीयं मम हृत्पद्मस्थितेनैव भर्गाख्येन तेजसा प्रेर्य्यमाणस्तद्देव भूर्लोकान्तरिक्षलोकस्वर्गलोकादिब्रह्माण्डोदरवर्त्ति सचराचरत्रैलोक्यस्वरूपं मम हृदयमध्ये बाह्ये च सूर्य्यमण्डलमध्ये वर्त्तमानतेजसा एकीभूतं परमब्रह्मस्वरूपं ज्योतिरहमिति चिन्तयन् जपं कुर्य्यादिति" ।

व्याहृत्यर्थास्तेब्रह्मणा सहाभेदश्च यथा भवति तथोच्यते ।

"भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च ।
तस्माद्भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता ॥
भवन्ति भूयो भूतानि उपभोगक्षये पुनः ।
कल्पान्ते उपभोगाय भुवस्तस्मात् प्रकीर्त्तिता ।
शीतोष्णवृष्टितेजांसि जायन्ते तानि वै सदा ।
आलयः सुकृतीनाञ्च स्वर्लोकः स उदाहृतः" ॥

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व ब्रह्मेति" श्रुत्या तस्यैव सर्व्वभूताधारत्वसिद्धेर्ब्रह्मणएव भूताधारादि भूम्यादिरूपत्वम् ।

कूर्म्मपुराणे तु प्रधानादिरूपत्वं व्याहृतीनामुक्तं यथा ।

"प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः" ॥

गायत्र्या जपप्रकारमाह योगियाज्ञवल्क्यः ।

"ओङ्कारं पूर्व्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च ।
गायत्री प्रणवश्चान्ते जपोह्येष उदाहृतः" ।

तेनाद्यन्तयोः प्रणवो जप्यः तत्र प्रणवस्य ब्रह्मवाचकत्वमाह गीतायाम् ।

"ओं तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः" ॥

पातञ्जलसूत्रेऽपि ईश्वरमुपक्रम्य "तस्य वाचकः प्रणव" इत्युक्तम् ।

ततश्चाद्यन्तयोर्जप्यप्रणवयोर्मध्ये आद्यस्य जपाङ्गतया निरर्थकत्वं अन्त्यस्य ब्रह्मविष्णुमहेश्वररूपत्वेन भर्गविशेषणत्वम् ।

यद्वा आद्यस्य ब्रह्मादिरूपत्वं द्वितीयस्य परब्रह्मरूपत्वम् ओँ शब्दस्य आङ्पूर्व्वकवेञोनिष्पन्नतया सर्व्वान्तानुस्यूतवाचकत्वात् "यस्मिन्नोतं च प्रोतञ्चेत्यादि श्रुतेः तस्यैव सर्वत्र सूत्रात्मतया स्थितिः।

मन्त्रमात्रस्य प्रणवपूर्व्वकत्वं तन्माहात्म्यञ्च शास्त्रसर्व्वस्वे दर्शितं यथा

योगियाज्ञवल्क्यः।

"प्रणवाद्याः स्मृतामन्त्राश्चतुर्वर्गफलप्रदाः।
तस्माच्च निःसृताः सर्वे प्रलीयन्ते च तत्र वै" ॥
मङ्गल्यं पावनं धर्म्म्यं सर्वकामप्रसाधनम्।
ओँकारः परमं ब्रह्म सर्वमन्त्रेषु नायकः॥
प्रजापतेर्मुखोत्पन्नस्तपः सिद्धस्य वै पुरा"।

योगियाज्ञवल्क्यः।

"यथा पर्णं पलाशस्य शङ्कुनैकेन धार्य्यते।
तथा जगदिदं सर्वमोङ्कारेणैव धार्य्यते॥
जपेन दहते पापं प्राणायामैस्तथा मलम्।
ध्यानेन जन्मनियातं धारणाभिश्च मुच्यते"॥

मनुः अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः।
वेदत्रयान्निरदुहत् भूर्भुवः स्वरितीति च" ॥

गीता ओँतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥
तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" ॥

योगियाज्ञ० "सिद्धानाञ्चैव सर्व्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाऽथोङ्कार उच्यते ॥
प्रणवाद्यायतोवेदा प्रणवे पर्य्युपस्थिताः ।
वाङ्मयं प्रणवः सर्व्वं तस्मात् प्रणवमभ्यसेत्" ॥
तथा सएव "आद्यं यत्राक्षरं ब्रह्म त्रयो यत्र प्रतिष्ठिताः ।
स गुह्योऽन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥
एक एव तु विज्ञेयः प्रणवो योगसाधनम् ।
गृहीतं सर्वसिद्धान्तैरितरैर्ब्रह्मवादिभिः॥
वेदभारभरार्त्तो यः स वै ब्राह्मणगर्द्दभः ।
यो वेत्ति ब्रह्मगोप्यन्तं त्रिमात्रार्द्धेषु तिष्ठति" ॥
तथा "त्रिमात्रार्द्धं परं ब्रह्म मात्राक्षरविवर्जितम् ।
अचिन्त्यमव्ययं सूक्ष्मं निष्कलं परमं पदम्" ॥
मनुः "क्षरन्ति सर्व्वा वैदिक्यो जुहोति यजतिक्रियाः ।
अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः" ॥
योगिया० "यथाऽमृतेन तृप्तस्य पयसा किं प्रयोजनम् ।
तथोङ्कारविधिज्ञस्य ज्ञानतृप्तिर्न विद्यते ॥
सर्व्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि ॥
यन्न्यूनमतिरिक्तञ्च यत् छिद्रं यदयज्ञियम् ।
यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् ।
तत्सदोङ्कारयुक्तेन मन्त्रेणाविकलं भवेत्" ।
छन्दोगगृह्यपरिशिष्टम् "यदोङ्कारमकृत्वा तु किञ्चिदारभ्यते तद्व्यं भवति तस्मात् वज्रभयात् भीत ओङ्कारं पूर्व्वमारभेत्"।

भयव्यासः "ओङ्कारं स्वर्गद्वारं तस्मात् सर्व्वेष्वेव कर्म्मस्वादौ प्रयुञ्जीत"।

छन्दोगपरिशिष्टम् "ओङ्कारपूर्व्वं हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्म्माणि दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपितृमन्त्रोच्चारणब्रह्मारम्भादि यच्चान्यत् किञ्चित् सर्व्वं प्रणवमुच्चार्य्य प्रवर्त्तयेत् समापयेच्च"।

मनुः "प्राक्कूले पर्य्युपासीनः पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति"॥

व्यासः "प्रणवस्य ऋषिर्ब्रह्मा गायत्री च्छन्द एव च।
देवोऽग्निः सर्व्वकार्य्येषु विनियोगः प्रकीर्त्तितः"॥

तथा "एवमार्षादिकं कृत्वा तत ओङ्कारमभ्यसेत्।
सार्द्धं त्रिमात्रमुच्चार्य्य दीर्घघण्टानिनादवत्"॥

योगियाज्ञवल्क्यः "त्रिमात्रस्तु प्रयोक्तव्यः सर्व्वारम्भेषु कर्म्मसु।
तिस्रः सार्द्धास्तु कर्त्तव्या मात्रास्तत्त्वार्थचिन्तकैः॥
देवताध्यानकाले तु प्लुतं कुर्य्यान्न संशयः।
तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत्॥
अप्लुतं प्रणवस्यान्तं यस्तं वेद स वेदवित्।
आद्यं तत्त्वाक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता॥
स गुह्योऽन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित्।

छन्दोगपरिशिष्टम् "स्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे, त्रैस्वर्य्योदात्तओङ्कारो यजुर्वेदे, दीर्घोदात्तएकाक्षरः सामवेदे, संक्षिप्तोदात्तएकाक्षर ओङ्कारः अथर्व्ववेदे"

बौधायनः "अपि वा प्रणवेन त्रिरन्तर्जले पठन् सर्व्वस्मात् पापात् प्रमुच्यते"।

 

हृदयम: "स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्याननिर्म्मन्थनाद्दिव्यं पश्येद्दग्निनिगूढवत् ॥
गीता "श्रोमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमाङ्गतिम्" ॥

श्रोङ्कारस्य मात्राविशेषाभिध्यानफलम् प्रश्नोपनिषदि निर्णीतं यथा

"एतद्वै सत्यकाम ! परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति । स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवति । अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते। स सोमलोकं, स सोमलोके विभूतिमनुभूय पुनरावर्त्तते । यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्म्मुच्यत एवं ह वै स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते । तदेतौ श्लोकौ भवतः

"तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ।
ऋग्भिरेतं यजुर्भिरन्तरिक्षं, स सामभिर्यत्तत्कवयो वेदयन्ते ।
तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति" उ० । विवृतञ्चैतत् श्रीमता शङ्कराचार्य्येण यथा

"एतद्ब्रह्म वै परञ्चापरञ्च ब्रह्म परं सत्यमक्षरं पुरुषाख्यमपरञ्च प्राणाख्यं प्रथमजं यत्तदोङ्कार एवोङ्कारात्मकमोङ्कार-

प्रतीकत्वात्। परं हि ब्रह्मशब्दाद्युपलक्षणानर्हं सर्वधर्म्म-विशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मन-साऽवगाहितुमोङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशित ब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्। तथाऽपरञ्च ब्रह्म। तस्मात्परञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपच-र्य्यते। तस्मादेवं विद्वानेतेनैवात्मप्राप्तिसाधनेनैव ओङ्काराभि-ध्यानेनैकतरं परमपरमन्वेति ब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः। स यद्यप्योङ्कारस्य सकलमात्राविभागज्ञो न भवति तथाप्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति किन्तर्हि यद्यप्येवमोङ्कारमेकमात्राविभागज्ञ एव केवलो ऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैव मात्राविशिष्टोङ्काराभिध्या-नेनैव संवेदितः सम्बोधितस्तूर्णं क्षिप्रमेव जगत्यां पृथिव्या-मभिसम्पद्यते किं? मनुष्यलोकमनेकानि जन्मानि जगत्यां तत्र तं पाठकं जगत्यां मनुष्यलोकमेवोपनयन्ते उपनिगमयन्ति ऋचः ऋग्वेदरूपा ह्योङ्कारस्य प्रथमा एका मात्रा। तदभि-ध्यानेन स मनुष्यजन्मनि द्विजाग्र्यः सन् तपसा ब्रह्मचर्य्येण श्रद्धया च सम्पन्नो महिमानं विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति। अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारमभि-ध्यायीत स्वप्नात्मके मनसि मननीये यजुर्म्मये सोमदैवत्ये सम्पद्यते एकाग्रतयात्मभावं गच्छति स एवं सम्पन्नो मृतोऽन्तरिक्षा-धारं द्वितीयरूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोम-लोकं सौम्यं जन्म प्रापयन्ति तं यजूंषीत्यर्थः। स तत्र विभू-तिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्त्तते। यः पुन-

रेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येते-मैवाक्षरेण प्रतीकेन परं सूर्य्यान्तर्गतं पुरुषमभिध्यायीत तेनो-भिध्यानेन प्रतीकत्वेन त्वालम्बनत्वं प्रकृतमोङ्कारस्य परञ्चाप-रञ्च ब्रह्मेति भेदाभेदश्रुतेरोङ्कारमिति च द्वितीयानेऽकश्मः श्रुता बाध्येत अन्यथा यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते तथापि प्रकृतानुरोधात्त्रिमात्रं परं पुरुषमिति द्वितीया परि-णम्या "त्यजेदेकं कुलस्यार्थे" इति न्यायेन। स तृतीयो मा-त्रारूपस्तेजसि सूर्य्ये सम्पन्नो भवति ध्यायमानो मृतोऽपि सूर्य्या त्सोमलोकादिवन्न पुनरावर्त्तते किन्तु सूर्य्यसम्पन्नमात्र एव। यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वै एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रा-रूपैरूर्द्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं स-त्याख्यम्। स हिरण्यगर्भः सर्वेषां संसारिणां जीवानामात्म-भूतः स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानाम् तस्मिन् लिङ्गात्मनि संहताः सर्वे जीवाः। तस्मात्स जीवघनः स विद्वांस्त्रिमात्रोङ्का-राभिज्ञः। एतस्माज्जीवघनाद्धिरण्यगर्भात् परात् परं परमात्मा-ख्यं पुरुषमीक्षते। पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्याय-मानः। तदेतावस्मिन् यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः। तिस्र स्त्रिसङ्ख्याका अकारोकारमकाराख्या ओङ्कारस्य मात्राः। मृत्यु र्यासां विद्यते ता मृत्युमत्यः मृत्युगोचरादनतिक्रान्ता मृत्युगो-चरा एवेत्यर्थः। ता आत्मनो ध्यानक्रियासु प्रयुक्ताः। किञ्च-न्योन्यसक्ता इतरेतरसम्बद्धाः। अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ताः। तथा न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अन-

विप्रयुक्ताः किन्तर्हि विशेषेणैकस्मिन्ध्यानकालेऽतिस्पष्टासु क्रिया-
सु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिस्थानपुरुषाभिध्यान-
लक्षणासु योगक्रियासु सम्यक् प्रयुक्तासु सम्यग्ध्यानकाले प्रयो-
जितासु न कम्पते न चलति ज्ञो योगी यथोक्तविभागज्ञः
ओङ्कारस्येत्यर्थः। न तस्यैवंविदश्चलनमुपपद्यते। यस्माज्जाग्र-
त्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोङ्काराात्मरूपेण दृ-
ष्टाः। स ह्येवंविद्वान् सर्व्वात्मभूत ओङ्कारमयः कुतो वा चले-
त्कस्मिन् वा ?। सर्व्वार्थसङ्ग्राहार्थो द्वितीयो मन्त्रः। ऋग्भिरेतं
लोकं मनुष्योपलक्षितम्। यजुर्भिरन्तरिक्षं सोमाधिष्ठितम्।
सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्या-
वन्तएव नाविद्वांसो वेदयन्ते। तं त्रिविधलोकमोङ्कारेण साध-
नेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान्। तेनैवोङ्कारेण
यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्-
स्वप्नसुषुप्तादिविशेषसर्वप्रपञ्चविवर्जितमत एवाऽजरं जराव-
र्जितममृतं मृत्युवर्जितमेव। यस्माज्जराविक्रियादिरहितम-
तोऽभयम्। यस्मादेवाभयं तस्मात्परं निरतिशयम्। तदप्यो-
ङ्कारेणायतनेन गमनसाधनेनान्वेतीत्यर्थः" भा०।

भारद्वाजस्मृतौ गद्यपद्याभ्यां गायत्र्यर्थोदर्शितो यथा।

"अथाहमर्थं गायत्र्याःप्रवक्ष्यामि यथातथम्॥

द्विजोत्तमानां सद्भक्त्या जपादीनि प्रकुर्वताम्।

विश्वासभक्तिजननं मन्त्रैर्यज्ज्ञानमुत्तमम्॥

तस्मादर्थं विजानीयाद्यत्नेन जपकृद्द्विजः।

द्वाभ्यां विश्वासभक्तिभ्यां जपादीनां महत्तरम्॥

फलं भवेज्जपकृतामिति वेदेषु भाषितम्।

पदानि दश मन्त्रस्य तदादीनि यथाक्रमात् ॥
पदं प्रत्यर्थनिष्पत्तिः स्पष्टं तु क्रियतेऽत्र हि ।

तदिति १ द्वितीयैकवचनम् अनेकजगदुत्पत्तिस्थितिलयकारणीभूतमुपकथ्यमानं निरुपमं तेजः सूर्य्यमण्डलाभिधेयं परं ब्रह्माभिधीयते । सवितुरिति २ षष्ठ्येक वचनं षूञ् प्राणिप्रसवे इत्यस्य धातोरेतद्रूपम् । सर्वस्य भूतजातस्य प्रसवितुरित्यर्थः । वरेण्यं ३ वरणीयं प्रार्थनीयं नियमादिभिरपगतकल्मषैः सततंध्येयम्, भर्गः ४ भञ्जो आमर्दने भ्रजि भर्जनइत्येतयोर्धात्वोर्भजतां पापभञ्जनहेतुभूतम् । अथवा भ्राज दीप्तावित्यस्य धातोर्भर्गस्तेज इत्यर्थः । देवस्य ५ वृष्टिदानादिगुणयुक्तस्य निरतिशयस्येत्यर्थः दीव्यतेःप्रकाशार्थत्वात् । धीमहि ६ मध्येचिन्तयामि निगमनिरुक्तविद्यारूपेण चक्षुषा योऽसावादित्ये हिरण्मयः पुरुषः सोऽहमिति चिन्तयामि । धिय ७ इति द्वितीयाबहुवचनम् । य इति ८ छान्दसत्वाल्लिङ्गव्यत्ययः। यत्तेजः सवितुर्देवस्य वरेण्यमस्माभिरभिध्यातम् भर्गो जपतां पापभञ्जनहेतुभूतं धीमह्युपास्महे । तत्तेजो नोऽ९स्माकं धियो १० बुद्धीः श्रेयस्करेषु कर्मसु प्रचोदयात् प्रेरयेदित्यर्थः ।

एषा व्याख्या तु गायत्र्याः सर्वपापप्रणाशनी ।
विज्ञातव्या प्रयत्नेन द्विजैःसर्वशुभेप्सुभिः ॥
जपस्याभ्यन्तरे व्याख्या स्मर्तव्या मनसा द्विजैः ।
स्मरणात् सर्वपापानि प्रणश्यन्ति न संशयः" ॥

गायत्र्यादिशब्दार्थतदीयचरणचतुष्टयार्थज्ञापनगायत्र्यादिशब्दनिर्वचनपूर्बकगायत्रीजपसन्ध्यादिनित्यकर्त्तव्यतामाह भारद्वाजः ।

"प्रयोगकाले मन्त्राणामृषिच्छन्दोऽधिदैवतम्।
विनियोगं शक्तिबीजं स्मरेन्नो चेद्वृथा फलम्॥
इदं समस्तं श्रुतिभिर्गायत्री चेत्युदाहृता।
विधिनैवाभ्यसेद् यावत्तुरीयं परमम्पदम्॥
भूरित्यादि त्रिभिर्मन्त्रैर्जप्या गायत्र्यनारतम्।
तस्य प्रथमपादेन भूर्भुवःस्वर्जगत्त्रयम्॥
व्याप्य द्वितीयपादेन वेदानां त्रितयं तथा।
तृतीयेन तु पादेन प्राणं व्यानमपानकम्॥
व्याप्तं चतुर्थपादेन परमं रविमण्डलम्।
क्रमेणानेन संक्रान्तं यथा व्याप्तमिदं जगत्॥
गायत्री सर्व्ववेदानां माता साक्षाद्द्विजाश्रया।
तामेव प्रजपेद्भक्त्या ध्यायेच्च सततं द्विजः॥
दुष्प्रतिग्रहदुर्भक्ष्यरूपांहोभ्योऽनिशं द्विजम्।
गायन्तं त्रायते यस्मात् गायत्रीति स्मृता ततः॥
प्राणा गया इति प्रोक्तास्त्रायते तानथापि वा।
गायत्रीति भवेन्नाम केवलं त्रायतीति वा॥
व्याप्य प्राणजिह्वासु सदा वाग्रसवर्त्मनात्।
सरस्वतीति नाम्ना च समाख्याता महर्षिभिः॥
सवितृप्रकाशकरणात्सावित्रीत्यभिधा भवेत्।
जगतः प्रसवित्रीति हेतुनानेन वापि च॥
तस्मादियं सदोपास्या निशादिवसयोर्द्विजैः।
गायत्री सन्धिवेलायां सैव सन्ध्येति कीर्त्तिता॥
श्री जपेदिदनं ज्ञात्वा मद्यस्यंहासि तत्क्षणात्।
ऋषिच्छन्दोदेवताश्च जपेत्ताश्चान्विताःक्रमात्॥

ज्ञात्वा पदानि श्रुत्वाथ चतुरीयं पादमव्ययम् ।
ब्रह्मणा याति तत्साम्यं पदं ज्ञात्वा तुरीयकम् ॥
या गायत्री त्रिचरणा सा त्रिमूर्त्तिस्वरूपिणी ।
उपास्यानन्ततरं विप्रैस्त्रिसन्ध्यासु त्रिमूर्त्तिषु ॥
तुरीयपादमेतस्याज्ज्ञात्वा योपास्तिमाचरेत् ।
सा रत्नपूर्णां पृथिवीं गृह्णन्नो दोषभाग्भवेत् ॥
ब्रह्मकेशवरुद्रादिदेवताभिरुपासिता ।
सन्ध्यान्तां केन सेवेत विप्रः स्वार्दभिलाषुकः ॥
प्रातः सतारकां सन्ध्यां सायं सन्ध्यां सभास्कराम् ।
स्नानकर्मणि तन्मध्यामुपासीत यथाविधि ॥
प्रातरेवमुपास्यैव प्रकुर्य्यात् हवनं जपम् ।
स्नानस्यानन्तरं कुर्य्यात् तर्पणञ्च महाक्रतून् ॥
सायं सन्ध्यामुपासीत होमं कुर्वीत शासनात् ।
सन्ध्योपासनहीनो यो न योग्यः सर्वकर्मसु ॥
तस्मादुपास्य विधिना सन्ध्यामन्यक्रियाश्चरेत् ।
नोपासयेद्द्विजःसन्ध्यां योऽसौ शूद्रत्वमाप्नुयात् ॥
कर्माण्यन्यानि संत्यज्य सन्ध्यां यः केवलं द्विजः ।
उपास्ते सर्वपुण्यानि कृतवान् स भवेदलम् ॥
सन्ध्योपास्तिं विना विप्रः पुण्याण्यन्यानि चाचरेत् ।
यस्तस्य तानि पापानि भवन्त्येव न संशयः ॥
नाशयेत् जन्मजनितं पापं दश जपाज्जनुः ।
पुराकृतं शतजपाद्गायत्र्यास्तु द्विजन्मनः ॥
कृतं युगेऽपि चैकस्मिन् सहस्रेण जपेन तु ।
सङ्ख्यया जपतस्तस्माद्गायत्रीं सर्वदा जपेत् ॥

समस्तसंसतन्तुभ्यो जपयज्ञः परः स्मृतः ।
हिंसयान्ये प्रवर्तन्ते जपयज्ञो न हिंसया ॥
यावन्तः कर्मयज्ञाश्च दानानि च तपांसि च ।
ते सर्वे जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिञ्च शाश्वतीम् ॥
यक्षराक्षसवेतालप्रेतभूतपिशाचकाः ।
जपाश्रयं द्विजं दृष्ट्वा दूरन्ते यान्ति भीतितः ॥
तस्माज्जपः सदा श्रेष्ठः सर्वस्मात्पुण्यसाधनात् ।
इत्येवं सर्वथा ज्ञात्वा विप्रोजपपरो भवेत् ॥
एवं जपपरःसन्ध्यां भक्त्योपासीत यो द्विजः ।
नियमेन सदा गच्छेद्दृषित्वं नात्र संशयः ॥
तस्माज्जितेन्द्रियोनित्यं सन्ध्योपास्तिं समाचरेत् ।
स सर्वलोकान् जित्वाऽथ विप्रः स्ववशमानयेत् ॥
तदन्ते ब्रह्मभावेन यावदाभूतसंप्लवम् ।
तावन्नित्यो निरातङ्कोभवेदत्र न संशयः ॥
एवं सन्ध्याविधिं सर्वं यो विप्रोऽध्यापयेत् द्विजः ।
अध्यापकोयथावस्थःश्रोता चैकाग्रमानसः ॥
स सर्वपापनिर्मुक्तः सर्वविद्याविशारदः ।
अथ धान्यधनोपेतो जीवेद्वर्षशतं सुखी ॥
एतद्विधानं योऽधीत्य श्रावयेत् ब्राह्मणोत्तमान् ।
प्रीतिपूर्वं प्रयत्नेन ब्राह्मणोनियमेन च ॥
अज्ञानेन प्रमादेन दुरितं यत्समुत्थितम् ।
तस्य तत्सकलं नाशं व्रजेदत्र न संशयः ॥

यः सन्ध्योपास्तयस्तिस्रोयस्य स्नानं विधीयते ।
पर्वणि श्रावणी यस्य तत् सर्वं पूर्णतामियात् ।
कामान्मोहाच्च लोभाच्च सन्ध्यां नातिक्रमेद् द्विजः ।
सन्ध्यातिक्रमणाद्विप्रो ब्राह्मण्याच्च्यवते यतः ।
अनागतां तु ये पूर्वामननीताञ्च पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ? ।
सायंप्रातः सदा सन्ध्यां ये न विप्रा उपासते ।
कामन्तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ।
विधानमेतन्नो देयं रहस्यं यस्य कस्यचित् ।
वेदाध्यायाभिजाताय प्रदेयं स द्विजन्मने" ७अ० ।

तस्या जपार्थमालासंस्कारादिः भरद्वाजेन अष्टमाध्यायादौ उक्तः विस्तरभयान्नोल्लिखितः । संक्षेपेण विधानपारिजातादौ दृश्यः सएवात्र क्रमेण प्रदर्श्यते तत्रादौ जपप्रकारमाह व्यासः ।

"प्रणवव्याहृतियुतां गायत्रं च जपेत् ततः ।
समाहितमनास्तूष्णीं मनसा चापि चिन्तयेत् ।
ध्यायेच्च मनसा मन्त्रं जिह्वौष्ठौ न च चालयेत् ।
न कम्पयेच्छिरोग्रीवादन्तान्नैव प्रकाशयेत् ।
कृत्वोत्तानौ करौ प्रातः सायं मुकुलितौ करौ ।
मध्ये तिर्यक्करौ प्रोक्तौ जपएवमुदाहृतः ।
विधियज्ञाज्जपयज्ञोविशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥
विनाशब्दं जपोयस्तु चलज्जिह्वाद्विजच्छदः ।
उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः ॥
पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।

पश्चिमां तु समासीनः सम्यगृक्षविभावनात्” ॥

[मध्याह्ने तु]। “तिष्ठंश्चेदीक्षमाणोऽर्कं जपं कुर्य्यात्समाहितः।

अन्यथा प्राङ्मुखः कुर्य्यात्समासीनः कुशासने ॥

आसन्यानाह व्यासः।

“कौशेयं कम्बलं चैव अजिनं पट्टमेव वा।

दारुजं बलपत्रं च आसनं परिकल्पयेत् ॥

कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि।

वस्त्राजिने व्याधिनाशः सर्व्वं वै चित्रकम्बले ॥

“नादीक्षितश्चोपविशेत्कृष्णसाराजिने गृही”।

इति निषेधाद्दीक्षितविषयं कृष्णाजिनम्।

“आत्मशय्याऽऽसनं वस्त्रं जायापत्यं कमण्डलुः।

शुचीन्यात्मन एतानि परेषां न कदाचन।

पादेन पादमाक्रम्य जपं नैव तु कारयेत् ॥

शिरः प्रावृत्य वस्त्रेण ध्यानं नैव प्रशस्यते।

न पाणिपादचपलो न नेत्रचपलो द्विजः।

न च वाक्चपलश्चैव जपन् सिद्धिमवाप्नुयात्।

मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम्।

अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः।

स्वस्तिकासनमासीनो जपसिद्धिमवाप्नुयात्।

जान्वोरन्तरे सम्यक्कृत्वा पादतले उभे।

ऋजुकायः समासीनः स्वस्तिकासनमुच्यते।

पद्मासनं समासीनः सर्वसिद्धिमवाप्नुयात्।

उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः।

ऊर्वोर्मध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ।

नासाग्रे विन्यसेद्दृष्टिं पद्मासनमिदं स्मृतम्" ।
आसनान्तराणि ग्रन्थगौरवभीत्या नोक्तानि ।
"वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जप्यं तद्धीनमफलं भवेत् ।
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ।
उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ।
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ।
यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत्" ।
[ अथ जपमाला प्रकारः पाद्मे ]
"अरिष्टं पुत्रजीवञ्च शङ्खं पद्मं तथा मणिम् ।
कुशग्रन्थिञ्च रुद्राक्षमुत्तमं चोत्तरोत्तरम् ।
अङ्गुलीजपसंख्यानमेकमेकं वरानने ! ।
पर्वभिर्दशसंख्यातं पुत्रजीवं फलैर्दश ।
शतं वै शङ्खमणिभिः प्रबालैश्च सहस्रकम् ।
मौक्तिकैर्दशसाहस्रं सौवर्णैर्लक्षमुच्यते ।
कुशग्रन्थ्या* कोटिगुणं तुलस्यानन्तकं फलम् ।
अक्षुसमरन्ध्रा च परिपूर्णा दृढा नवा ।
निश्चला ग्रथिता व्यङ्गा अन्योन्यघृष्टिवर्जिता ।
सशब्दा चञ्चला या तु त्रुटिता पथिता तु या ।
भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी ।
माला दुःखप्रदायिन्यो ग्रथिता निन्द्यतन्तुभिः" ।
* पाषण्डस्य तत्सम्बन्धिनी ।
"अक्षास्थिमात्रामणयः श्रेष्ठाः स्युर्जपकर्म्मणि ।

अष्टोत्तरशतं संख्या मणीनां श्रेयसी भवेत् ।
तदर्द्धसंख्या कथिता मध्यमा चाधमा पुनः ।
सप्तविंशतिसंख्याता ततो नैवाधमा भवेत् ।

तर्ज्जन्या न स्पृशेत् सूत्रं न कम्पेन्न विधूनयेत् ।
अङ्गुष्ठस्य तु मध्यस्थं परिवर्त्तं समाचरेत् ।
मध्यमाकर्षणं तस्याः सर्वसिद्धिप्रदायकम् ।
नान्याङ्गुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत् ।
अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एवं हि कर्तव्य एकाग्रमनसा सदा" ।

पाणिमाला चेत्थम् ।

"अनामिका मध्यरेखावध्यधःप्रक्रमेण च ।
तर्जन्यादिगतान्ते च अक्षमाला करे स्थिता" ।

अस्यार्थः। अनामिकामध्यरेखामादिं कृत्वा तदवध्यधःक्रमेण प्रदक्षिणावर्त्तं तर्जन्या आदिरेखा अन्ते कार्य्या सेयङ्करे स्थिता मालेत्यर्थः ।

यमः "सहस्रपरमां देवीं शतमध्यान्दशावराम् ।
गायत्रीं तु जपेन्नित्यं सर्वकल्मषनाशिनीम् ।
पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः ।
गायत्र्या वेदबीजत्वाद्वेदः पर्वसु गीयते ।
मध्यमादिपर्वद्वयं जपकाले तु वर्जयेत् ।
एवं मेरुं विजानीयाद्गदितं ब्रह्मणा स्वयम् ।
अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घनात् ।
असंख्यातं तथा जप्तं तत्सर्वं निष्फलम्भवेत् ।

आश्रमविशेषे जपविशेषमाह मनुः ।

"ब्रह्मचारी गृहस्थश्च शतमोष्टत्तरञ्जपेत् ।
वानप्रस्थो यतिश्चैव द्विसहस्राधिकं जपेत्" ।
गृहस्थस्य संख्यान्तरमुक्तं यमेन ।

अष्टोत्तरशतं कुर्य्याच्चतुःपञ्चाशिकापि वा ।
सप्तविंशतिका कार्य्या ततोनैवाधमा मता" ।

दशावरामिति प्रागुक्तं तु कार्य्यान्तरासक्तविषयम् ।
याज्ञवल्क्योऽत्र विशेषमाह ।

"सर्व्वेषाञ्चैव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकाभ्यासो गायत्र्याः शोधनं परम्" ।

मन्त्रसिद्धिकामस्य चतुर्विंशतिलक्षजप उक्तः शारदातिलके ।

"तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ।
व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितोजपेदिति" ।
स्थानभेदे जपफलभेदस्तत्रैव ।
"गृहे त्वेकगुणं ज्ञेयं नद्यान्तु द्विगुणं स्मृतम् ।
गवाङ्गोष्ठे दशगुणं अग्न्यागारे दशाधिकम् ।
सिद्धिक्षेत्रेषु सर्व्वेषु देवतायाश्च सन्निधौ ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ" ।

कामनाविशेषेणाङ्गुलिविशेषमाह वसिष्ठः ।

"अङ्गुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशनी ।
मध्यमा धनसिद्ध्यै स्याच्छान्तिकर्म्मण्यनामिका ।
कनिष्ठाऽऽकर्षणे ज्ञेया जपकर्म्मणि सिद्धिदा ।
"कूर्म्मचक्रे दीपन्दत्त्वायजेत्सर्वार्थसिद्धिदम्" इत्युक्तेः ॥
कूर्म्मचक्रोद्धारतत्स्थानभेदे फलञ्च तत्रैव ।
"वर्त्तुलं नवकोष्ठं तत् कृत्वा कूर्म्माकृतिं लिखेत् ।

स्वरयुग्मं क्रमेणैव ऐन्द्राद्यष्टासु दिक्षु च ।
कादीन्वर्गान् चमैशान्यां तथा मध्ये स्थलाधिपम् ।
तन्नामाद्यक्षरं यत्र कूर्मास्यं तत्र दीपकम् ।
तत्पार्श्वकोष्ठौ हस्तौ द्वौ अधोऽधः कुक्षिपादकौ ।
शेषकोष्ठं भवेत् पुच्छं मुखे सिद्धिरनुत्तमा ।
करस्थाने महाक्लेशः कुक्षौ दुःखमवाप्नुयात् ।
पदोर्हानिस्तथा पुच्छे पीड़ा स्याद्बन्धनादिभिः ।
मोक्षार्थी वदने कुर्य्याद्दक्षिणे त्वाभिचारिकम् ।
श्रीकामः पश्चिमे कुर्य्यात् उत्तरे शान्तिदं भवेत् ।
ईशाने शत्रुनाशः स्यादाग्नेये शत्रुदायकः ।
नैरृत्ये शत्रुहानिः स्याद्वायव्ये तु पलायनम् ।
ग्रामे देवे वने वापि यत्र कुत्रावलोकयेत् ।
दीपस्थाने जपः कार्य्यः सर्वसिद्धिमभीप्सुभिः ।
कूर्म्मचक्रमसंज्ञाय यः कुर्य्याज्जपसंज्ञकम् ।
तस्य जप्यफलं नास्ति सर्वानर्थाय कल्पते" इति ।
होमस्तु । "क्षीरौदनतिलादूर्वाक्षीरद्रुमसमिद्वरैः ।
पृथक् सहस्रत्रितयं जुहुयान् मन्त्रसिद्धये ।
तत्त्वसंख्या सहस्राणि मन्त्रविज्जुहुयात्तिलैः ।
सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ॥
अरुणाब्जैस्त्रिमध्वक्तैर्ज्जुहुयादयुतन्ततः ।
महालक्ष्मीर्भवेत् तस्य षण्मासान् नात्र संशयः ।
बहुना किमिहोक्तेन यथावत् साधु साधिता ।
द्विजन्मनामियं विद्या सिद्धा कामदुघा भवेदिति ।

अन्यजपे तु शौनकः ।

प्रातर्विप्रः शुचिः स्नातो हविष्याशी जितेन्द्रियः ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा ।
होमांश्च जपयज्ञांश्च नित्यं कुर्वीत चैतया ।
सर्वकर्मसमृद्ध्यर्थं परं ब्रह्मेदमुच्यते ।
एषैव प्रतिलोमोक्ता या स्याच्छत्रुविनाशिनी ।
कपिलाज्येन यः कुर्याद्धोममष्टोत्तरं शतम् ।
तस्य कामाः प्रसिद्ध्यन्ति षण्मासादेव जुह्वतः" इति ।

इत्युक्तप्रकारेण यथाशक्ति जपं कृत्वा गायत्रीध्यानं कृत्वा षड़ङ्गन्यासान् कृत्वा । उत्तमे शिखरे जाते इत्यादि यथायथं शाखाभेदेन विसर्ज्जनं कृत्वा ब्रह्मार्पणं कुर्य्यात् ।

योगीश्वरः । "करे नीरं समादाय देवा गात्विति मन्त्रतः ।
निवेदयेज्जपं प्रातः प्रयोगस्तत्र कथ्यते ।
प्रातः सन्ध्याङ्गभूतेन गायत्र्यास्तु जपेन च ।
साष्टेन शतसंख्येन ब्रह्मा मे प्रीयतां रविः" इति ।

मुख्यकाले सन्ध्यावन्दनाकरणे प्रायश्चित्तमाह । व्यासः ।
"आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्वतः ।
स्नात्वा प्राणांस्त्रिराचम्य गायत्र्यष्टशतं जपेत्" ।

पारिजाते तु ।
"कालातिक्रमेणे चैव चतुर्थ्यार्घ्यं प्रदापये- दित्युक्तम्" ।

मलमासतत्त्वे तु
"कालातीता वृथा सन्ध्या वन्ध्यास्त्रीमैथुने यथा ।
गायत्रीं दशधा जप्त्वा पुनःसन्ध्यां समाचरेत्" ।

काशीखण्डे प्रायश्चित्तान्तरमुक्तम् । अत्र यथाचारं व्यवस्था

सङ्गवपर्य्यन्तप्रातः सन्ध्याया गौणकालः ।
आप्रदोषावसानं सायं सन्ध्यायाः इति मण्डनः ।
"उदयास्तमयादूर्द्धं यावत् स्याद्घटिकात्रयम् ।
तावत् सन्ध्यामुपासीत प्रायश्चित्तमतः परमिति
स्कान्दे विशेष उक्तिः । मध्याह्ने तु दक्षः ।
"अर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते ।
अर्घ्यप्रदानतः पूर्वमुदयास्तमयेऽपि वा ।
गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजातिभिरिति" ।
गौणकालेऽप्यसम्भवे यमः ।
दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
शर्वर्याः प्रथमे यामे तावत् कुर्य्याद्यथाक्रमम्" ।

अत्र मुख्यकालानुरोधात् सायंसन्ध्योपासनं पूर्वं कृत्वा "आगन्तूनामन्ते निवेशः" इति न्यायेनातीतकालं कर्म पश्चात् कार्य्यमिति न्यायतः प्राप्तं तस्य निषेधार्थं यथाक्रममिति वचनमिति ।

"दिवोदितानि कर्माणि प्राप्नुवन्तीतराणि च ।
दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु" मदनपारिजाते वसिष्ठोक्तिः सूतके विशेषः सूतके इत्यनुवृत्तौ ।
"अवगाहं ब्रह्मयज्ञं सौरजप्यञ्च वर्जयेत्" इति ।
"स्नानं सन्ध्यां त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात् स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत् ।
सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः" । इत्यनयोर्विरोधाय न मानससन्ध्यानिषेध इति कल्प्यम् ।

किन्त प्राणायाममन्त्वा मनसापि नोच्चार्य्या इत्यर्थः।

पैठिनसिस्तु। "सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यन्ध्यायन्नमस्कुर्य्यात्" इत्यर्घ्यदानान्तां सन्ध्यामाह।

अत्रि तु—उच्चार्य्य वाचा गायत्रीन्दद्यादर्घ्याञ्जलीनपि।]

अष्टविंशति कृत्वोऽत्र गायत्रीं मनसा जपेदिति गायत्री जपमप्याहुः। वाचस्पत्ये चास्माभिः सूतकेऽपि सन्ध्याविशेषकरणं समर्थितं यथा।

"सूतके कर्म्मणान्त्यागः सन्ध्यादीनां विधीयते"

इति यद्यपि सन्ध्यायानिवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकङ्कार्य्यम्।

"सूतके सावित्र्या चाञ्जलिम्प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यादिति" पैठिनसिस्मरणात्। इति मिताक्षरा।

सन्ध्यादीनामप्यपवादमाहापरार्के पुलस्त्यः।

"सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्।

न त्यजेत् सूतके वापि त्यजन् गच्छेदधोद्विजः।

सूतकेऽसूतके चैव संध्याकर्म्म समाचरेत्।

मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः"

यत्तु चन्द्रिकायां जावालः

"सन्ध्यां पञ्च महायज्ञान्नैत्यिकं स्मृतिकर्म्म च।

तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया"

यच्च संवर्तः "सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते"

यच्च विष्णुपुराणे "सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति।

तत् संपूर्णसन्ध्यानिषेधपरम्।

"अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जितेति"।

शुद्धिदीपे चवनोक्तः पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह"।

सूतके सावित्राञ्जलिंप्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्य्यात्"।

प्रयोगपरिजाते भरद्वाजोपि"]

"सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम्।

यथा मार्जनमन्त्रांस्तु मनसोच्चार्य्य मार्जयेत्।

गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत्।

मार्जनं तु न वा कार्य्यमुपस्थानं न चैवहि"।

इत्येवं मिताक्षरापरिजातादौ अशौचे सन्ध्याकरणविशेषस्योक्तेः गौड़ानां तदनाचरणमनाचार एव तस्य श्रौतत्वेन स्मृत्या बाधानुचितत्वादिति द्रष्टव्यम्।

श्राद्धभोजिनोऽत्र विशेषः संग्रहे।

"दशकृत्वः पिबेदापोगायत्र्या श्राद्धभुग्द्विजः।

ततः सन्ध्यामुपासीत शुध्यति तदनन्तरम्।

गोभिलः।

'सन्ध्यां येन न विज्ञाता सन्ध्या नैवाप्युपासिता।

जीवमानो भवेच्छूद्रोमृतः श्वा वाभिजायते" इति।

'अत्र जपात् पूर्व्वं पश्चाद्वोभयत्र वा चतुर्विंशतिः मुद्रा दर्शनीयाः। ताश्चोक्ताः गायत्रीहृदये। १संमुख २संपुट ३वितत ४विस्तीर्ण ५द्विमुख ६त्रिमुख ७चतुर्मुख ८पञ्चमुख ९षण्मुख १०अधोमुख ११व्यापकाञ्जलिक १२शकट १३यमपाश १४ग्रन्थित १५संमुखोन्मुख १६विलम्ब १७मुष्टिक १८मीन १९कूर्म्म २०वराह २१सिंहा-

क्रान्त २२महाक्रान्त २३मुद्गर २४पल्लव इत्याख्या: ।

तत्र—"संमुखं १संहतौ हस्तावुत्तानौ कुञ्चिताङ्गुलौ ।

संपुटं २०पद्मकोषाभौ तावेवानग्रोन्नसंहतौ ।

विततं ३संमुखौ हस्तावुत्तानावायताङ्गुलौ ।

विस्तीर्णं ४संहतौ पाणी मिथोमुक्ताङ्गुलीद्वयौ ।

समुखासक्तयो: पाण्यो: कनिष्ठाद्वययोगत: ।

शेषाङ्गुलीनां वैरल्यात्द्विति चमुखादय:" ।

संमुखासक्तपाण्यो:कनिष्ठाद्वययोगेन शेषाङ्गुलीनां सविरलत्वेनाङ्गुलद्वयमारभ्यानामिकान्तं यावत्द्विमुख ५त्रिमुख६चतुर्मुख ७पञ्चमुखाख्या ८मुद्रा: स्यु: ।

"शेषाङ्गुलीनां संयोगात् पूर्वयोगविनाशत: ।

तिर्य्यक्संयुज्यमानाग्रौ संयुक्ताङ्गुलिमण्डलौ ।

हस्तौ षण्मुख९मित्युक्ता मुद्रा मुद्राविशारदै:" ।

अत्र पूर्व्वयोगविनाशत इत्यत्र पूर्वयोग: कनिष्ठाद्वययोगस्तद्विनाशेनेत्यर्थ: । शेषं सुगमम् ।

"आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखम् १० ।

उत्तानौ ताहशावेवाव्यापकाञ्जलिकं ११ करौ ।

अधोमुखौ बद्धमुष्टीपदृदीर्घाङ्गुष्ठकौ करौ ।

शकटं १२नाम कथितमिति मुद्रा पुरातनै: ।

"बद्धमुष्टिकयो: पाण्योरुत्ताना वामतर्जनी ।

कुञ्चिताग्राऽनया युक्ता तर्जन्या न्युब्जवक्रया ।

यमपाशमिति १३प्रोक्तं मुद्रा मुद्राविशारदै:" ।

अस्यार्थ: । बद्धमुष्टिकयो: पाण्योर्या उत्ताना कुञ्चिताग्रा

वामतर्जनी साऽन्यया दक्षिणतर्जन्या न्यञ्चवक्रया युक्ता यम
'पाशमुद्रेति।

"उत्तानसन्धिसंलीनबद्धाङ्गुलिदलौ करौ।

समुपोद्घाटितौ दीर्घाविङ्गुष्ठौ ग्रथितं १४मतम्"।

उत्तानानि सन्धिसंलीनानि बद्धान्यङ्गुलिदलानि पयोस्तौ तथोक्तौ। शेषं सुगमम्।

"सञ्चितोर्ध्वाङ्गुलिर्वामस्ताट्टशो दक्षिणे न तु।

अधोमुखेन संयुक्तः सन्मुखोन्मुख १५उच्यते।

उत्तानौ नतकोटी च विलम्बः १६कथितः करौ।

मुष्टी चान्योन्यसंसक्तावुत्तानौ मुष्टिको १७भवेत्।

मीनस्तु१८ समुखीभूतौ युक्तानामाकनिष्ठिकौ।

ऊर्ध्वसंयुक्त वक्राग्रशेषाङ्गुलिदलौ करौ"

युक्ते अनामिकाकनिष्ठिके ययोस्तौ तथोक्तौ।
तथा ऊर्द्धसंयुक्तानि वक्राणि शेषाङ्गुलिदलानि ययोः करयोस्तौ, तथा लक्ष्मा मीनो नाम मुद्रा।

"अधोमुखकरौ वामस्ताट्टशो दक्षिणे न तु।

पृष्ठदेशे समाक्रान्तः कुर्म्मो१९नामाभिधीयते॥

ऊर्द्धमध्यो वामभुजो दक्षकक्षाश्रये करे।

वराहेति २०समाख्याता मुद्रा मुद्राविशारदैः"।

दक्षकक्षाश्रये करे सति उक्तलक्षणो वामभुजो वराहा नाम मुद्रा।

"तथा तथाङ्गुलि सिंहाक्रान्तं २१कर्णाश्रितौ करौ।

किञ्चिदाकुञ्चिताग्रौ चेन्महाक्रान्तं २२ततःपरम्"॥

तावेव कुञ्चिताग्रौ महाक्रान्तं नाम मुद्रा।

"ऊर्द्ध किञ्चिद्‌गतौ पाणौ२३मुद्‌गरो वामतर्ज्जनी।

ग्रस्ता दक्षिणहस्तेन मुद्रोक्ताकैर्विदैरियम्"।

अस्यार्थः। किञ्चिदूर्द्धगतयोः पाण्योर्या वामतर्ज्जनी दक्षि-णहस्तेन गृहीता सा मुद्‌गर मुद्रा।

"अधोमुखः स्थितौ मूर्द्ध्नि पल्लवो२४दक्षिणः करः"॥

अस्यार्थः। उक्तलक्षणवामतर्ज्जन्याः मूर्द्ध्नि अधोमुख-स्थितौ दक्षिणकरः पल्लवो नाम मुद्रेति।

"न जातु दर्शयेन्मुद्रां महाजनसमागमे।

देवास्तस्य न पश्यन्ति विफलञ्च कृतं भवेदिति"॥

तस्माद्रहस्येव मुद्रा दर्शनीयाः। एवं चतुर्विंशतिमुद्रादर्श-नासामर्थ्ये वक्ष्यमाणपञ्चमुद्राप्रदर्शनमवश्यं कार्य्यम।

गायत्रीतर्पणप्रयोगोविधानपारिजाते यथा

ओं भूः पुरुषर्ग्वेदं तर्पयामि-१। ओं भुवः पुरुषयजुर्वेदं तर्प-यामि-२। ओं स्वः पुरुषसामवेदं तर्पयामि-३। ओं महः पुरु-षाथर्ववेदम्-४। ओं जनः पुरुषेतिहासपुराणम्-५। ओं तपः पुरुषसर्वागमम्-६। ओं सत्यं सप्तलोकम्-७। ओं भूर्भुवः स्वः पुरुषमण्डलान्तर्गतम्-८। ओं भूः एकपदां गायत्रीम्-९। ओं भुवः द्विपदां गायत्रीम्-१०। ओं स्वः त्रिपदां गायत्रीम्-१०। ओं भूर्भुवः स्वश्चतुष्पदां गायत्रीम्-१२। ओं ओषसम्-१३। ओं गायत्रीम्-१४। ओं सावित्रीम्-१५। ओं सरस्वतीम्-१६। ओं वेद-मातरम्-१७। ओं पृथिवीम्-१८। ओं जयाम्-१९। ओं कौ-शिकीम्-२०। ओं सांकृतीम्-२१। ओं सर्व्वापराजितो-म्-२२। ओं सहस्रमूर्त्तिम्-२३। अनन्तमूर्त्तिम्-२४।"

"मन्त्रैरेभिस्तथा नित्यं चतुर्विंशतिसम्मितैः।

गायत्रीं तर्पयेत्तेन तर्पितं सचराचरम् ॥
अनेन विधिना कुर्य्यात् प्रातःकाले च तर्पणम् ।
मध्याह्ने चैव सायाह्ने मन्त्रैरेतैश्च तर्पणम् ॥

अन्यत्र चतुर्विंशत्यक्षराणां देवतास्तेषां ध्यानभेदेन अङ्गभेदे न्यस्ततयोक्तिः यथा

“अक्षराणाञ्च सर्वेषां प्रजापतिऋषिस्तथा ।
विनियोगोऽङ्गविन्यासे गायत्रीच्छन्दउच्यते ॥
अक्षराणान्तु सर्वेषां वक्ष्यन्ते देवताः क्रमात् ।
अग्निवायुसूर्य्यविद्युद्यमावरुण एव च ॥
बृहस्पतिश्च पर्ज्जन्य इन्द्रोगन्धर्व एव च ।
पूषाश्विवश्च त्वष्टा च वसवश्च मरुत्तथा ॥
सोमाङ्गिराविश्वेदेवा अश्विनौ च प्रजापतिः ।
सर्वदेवश्च रुद्रश्च ब्रह्माविष्णुस्तु देवताः ॥
जपकाले चिन्तनीयास्तासां सायुज्यमाप्नुयात् ।
“तत्कारं १ चम्पकापोतं ब्रह्मविष्ण्वग्निवात्मकम् ॥
शतपत्रासनारूढं ध्यायेत् सुस्थासनस्थितम् १ ।
सकारं २ चिन्तयेद्देवमतसीपुष्पसन्निभम् ॥
पद्ममध्यस्थितं सौम्यमुपपातकनाशनम् ।,
विकारं ३ कपिलं नित्यं कमलासनसंस्थितम् ॥
ध्यायेच्छान्तं द्विजश्रेष्ठो महापातकनाशनम् ।
तुकारं ४ चिन्तयेत् प्राज्ञ इन्द्रनीलसमप्रभम् ॥
निर्द्दहेत्सर्वपापञ्च ग्रहरोगसमुद्भवम् ।
वकारं ५ वह्निदीप्ताभं चिन्तयेच्च विचक्षणः ॥
भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति ।

रेकारं ६ विमलं ध्यायेत् शुद्धस्फटिकसन्निभम्
पापं नश्यति तत् क्षिप्रमगम्यागमनोद्भवम् ॥
णकारं ७ (द्रुतचारणार्थं) चिन्तयेद्योगी शुद्धस्फटिकसन्निभम्
अभक्ष्यभक्षणं पापं तत्क्षणादेव नश्यति ।
यकारं ८ तारकावर्णमिन्दुशेषविभूषितम् ।
योगिनां वरदं ध्यायेत् ब्रह्महत्या-विनाशनम् ॥
भकारं ९ कृष्णवर्णन्तु नीलमेघसमप्रभम् ।
ध्यात्वा पुरुषहत्यादिपापं नाशयति द्विजः ॥
गोकारं १० रक्तवर्णञ्च कमलासनसंस्थितम् ।
गोहत्यादिकृतं पापं ध्यात्वा नश्यति तत्क्षणात् ॥
टेकारं ११ रक्तसङ्काशं कमलासनसंस्थितम् ।
चिन्तयेत् सततं योगी स्त्रीहत्यादहनं परम् ॥
वकारं १२ चिन्तयेच्छुभ्रं जातीपुष्पसमप्रभम् ।
गुरुहत्याकृतं पापं ध्यात्वा नश्यति तत्क्षणात् ।
स्यकारन्तु १३ तथा पीतं सुवर्णसदृशप्रभम् ।
मनसा चिन्तितं पापं ध्यात्वा नुदति चानघः ॥
श्रीकारं १४ चिन्तयेत् शुक्लं कुन्दपुष्पसमप्रभम् ।
पितृमातृबधात् पापान्मुच्यते नात्र संशयः ॥
मकारं १५ पद्मरागाभं चिन्तयेद्दीप्ततेजसम् ।
पूर्वजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥
हिकारं १६ शङ्खवर्णन्तु पूर्णचन्द्रसमप्रभम् ।
अशेषपापदहनं ध्यायेन्नित्यं विचक्षणः ।
धिकारं १७ पाण्डरं ध्यायेत् पद्मस्योपरि संस्थितम् ॥

प्रतिग्रहकृतं पापं स्मरणादेव नश्यति।

योकारं १८ रक्तवर्णन्तु इन्द्रगोपसमप्रभम्॥

ध्यात्वा प्राणिवधे पापं निर्द्दहेन्मुनिपुङ्गव!।

द्वितीयश्चैव यः प्रोक्तो योकारो १९ रक्तसन्निभः।

निर्द्दहेत् सर्व्वपापानि नान्यैः पापैः प्रलिप्यते।

नःकारन्तु २० मुखं पूर्वमादित्योदयसन्निभम्।

सकृद्ध्यात्वा द्विजश्रेष्ठ! स गच्छेत् परमं पदम्।

नीलोत्पलदलश्यामं प्रकारं २१ दक्षिणायनम्॥

सकृद्ध्यात्वा द्विजश्रेष्ठ! स गच्छेदैश्वरं पदम्।

सौम्याङ्गं रोचनापीतं चोकारं २२ चतुराननम्॥

सकृद्ध्यात्वा द्विजश्रेष्ठ! स गच्छेद्वैष्णवं पदम्।

शुक्लवर्णेन्दुसङ्काशं दकारं २३ पश्चिमाननम्॥

सकृद्ध्यात्वा द्विजश्रेष्ठ! स गच्छेद्ब्रह्मणः पदम्।

यात्कारन्तु २४ शिरं प्रोक्तं चतुर्वेदनसप्रभम्॥

प्रत्यक्षफलदो ब्रह्मविष्णुरुद्र इति स्मृतिः।

एतद्ध्यात्वा तु मेधावी जपं होमं करोति यः।

न भवेत् सूतकं तस्य मृतकञ्च न विद्यते॥

यस्त्वेवं न विजानाति गायत्रीञ्च तथा विधिम्

कथितं सूतकं तस्य मृतकञ्च मयानघ!॥

नैवं दानफलं तस्य न च यज्ञफलं भवेत्।

न च तीर्थफलं प्रोक्तं तस्यैव सूतके सतीति॥

अथ वर्णकल्पः। यथा हि गायत्री तन्त्रे।

"तकारं १ चम्पकापीतं ब्रह्मविष्णुशिवात्मकम्॥

त्सकारं २ चिन्तयेत् श्यामं विकारं ३ कपिलं तथा

तु ४ कारमिन्द्रनीलाभं वकारं ५ वह्निसन्निभम् ॥

ऐकारं ६ वह्निसङ्काशं णिकारं ७ (इन्द्रवारणार्थः) रक्तवर्णकम्।

यङ्कारं ८ धूम्रसङ्काशं भकारं ९ कृष्णमेव च।

र्गोकारं १० रक्तवर्णञ्च देकारं ११ श्यामलं तथा॥

वकारं १२ शुक्लसङ्काशं स्यकारं १३ नीलशोभितम्।

धीकारं १४ कुन्दपुष्पाभं मकारं १५ शुक्लमेव च ॥

हिकारं १६ चन्द्रसङ्काशं धिकारं १७ पीतमेव च।

योकारं १८ तड़िदाकारं योकारं १९ धूम्रवर्णकम् ॥

अशेषं शोषयेत् पापं वायुवीजं (यः)यथा तथा।

नकारन्तु २० मुखं प्रोक्तं प्रतप्तकनकप्रभम् ॥

नकारस्य समीपे तु विन्दुद्वयं विशेषतः।

ऊर्द्धविन्दुं रक्तवर्णमधः श्यामं प्रकीर्त्तितम् ॥

नीलोत्पलदलश्यामं प्रकारं २१ दक्षिणामुखम्।

सौम्यं गोरोचनापीतं चोकारं २२ पश्चिमामुखम् ॥

शुक्लशङ्खसमाकारं दकारं २३ चोत्तरामुखम्।

यात्कारं २४ मूर्द्धनि विज्ञेयं ऊर्द्धास्यं ब्रह्ममन्दिरम् ॥"

पूर्वोक्तगायत्रीवर्णध्यानोक्तवर्णेन यत्र यत्र विशेषस्तत्र तत्राम्नायभेदेन विकल्पो ज्ञेयः ॥

अथ गायत्रीयन्त्रम् ॥

आदौ त्रिकोणं विन्यस्य षट्कोणं तद्बहिर्न्यसेत्।

वृत्तञ्चाष्टदलं पद्मं तद्बहिश्चतुरस्रकम् ॥

चतुर्द्वारसमायुक्तं सावित्रीयन्त्रमीरितम्।

शारदायाम्।

विधाय मण्डलं विद्वान् त्रिकोणोज्ज्वलकर्णिकम्।

मण्डलमिति सर्वतोभद्रमण्डलम्। त्रिकोणोज्ज्वलमिति तत्कर्णिकायां त्रिकोणं लिखेत्॥ अथ गायत्र्या ऋष्यादिन्यासः शारदायाम् एकविंशतिपटले।

"ऋष्याद्याः प्रणवस्यैते मुनिभिः परिकीर्त्तिताः।
जमदग्निभरद्वाजभृगुगौतमकाश्यपान्॥
विश्वामित्रवशिष्ठाख्यौ व्याहृतीनामृषीन् विदुः।
गायत्र्युष्णिगथानुष्टुब्बृहतीपङ्क्तयः पुनः॥
त्रिष्टुब्जगत्यौ छन्दांसि कथितानि मनीषिभिः॥
मरुदर्च्चिरनिलः सूर्य्यो वाक्पतिर्व्वरुणोवृषा।
विश्वे देवाः क्रमादासां देवताः परिकीर्त्तिताः॥
गायत्र्या मुनिराख्यातो विश्वामित्रो महाद्युतिः।
गायत्री छन्द इत्युक्तं देवता सविता स्मृता।
शिरसोऽस्य मुनिर्ब्रह्मा छन्दोदेव्यादिका स्मृता॥
गायत्री परमात्मा स्याद्देवता कथिता बुधैः।
व्याहृतीः सप्ततारांद्या हन्मुखांशोरुयुग्मके॥
जठरे न्यस्य मन्त्रज्ञो गायत्र्यर्णान् तनौ न्यसेत्।
पत्सन्धिषु ध्वजे (लिङ्गे) नाभौ हृत्कण्ठभुजसन्धिषु
आस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः।
पाश्चात्योत्तरयाम्याग्रमूर्द्धदङ्क्षेषु साधकः॥
पदानि दश विन्यस्येदेषु स्थानेषु मन्त्रवित्।
शिरोभ्रूमध्यहृद्दक्ष कण्ठहन्नाभिगुह्यके॥
जानुनोः पादयोर्युग्मे तच्छिरः शिरसि न्यस्येत

अथ षडङ्गन्यासः निर्व्वाणतन्त्रे।
षडङ्गन्यासमन्त्रं यत्तत् शृणुष्व प्रियंवदे।

प्रणवद्वयं हि हृत्पद्मे भूःकारं शीर्षदेशके ॥

भुवः शिखायां, स्वःकारं,कवचे विन्यसेत् सुधीः

नेत्रत्रये भूर्भुवः स्वः, स्वःकार करयुग्मके ॥

नमः स्वाहा वषट् कूर्चं वौषट् फट् क्रमतो न्यसेत् ।

शारदायान्तु ॥

ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम् ।

शिखा रुद्राय कवचमीश्वराय समीरितम् ॥

नेत्रं सदाशिवायोक्तम् अस्त्रं सर्वात्मने स्मृतम् ।

षड़ङ्गान्येवमुक्तानि यथास्थानं प्रविन्यसेत् ॥

अथ ध्यानम् निर्व्वाणतन्त्रे

"ध्यानं शृणु वरारोहे ! यथा ध्यात्वा जपेन्नरः ।

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ॥

श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता ।

आदित्यमण्डलान्तःस्था ब्रह्मलोकगताथ वा ॥

अक्षसूत्रधरा देवी पद्मासनगता तथा ।"

वेदोक्तध्यानन्तु

ओं तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देव यजनमसि । गायत्री एकपदी द्विपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय पराय परोरजसे" इति ।

शारदोक्तध्यानं यथा ॥

"मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै

र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वाख्यवर्णात्मिकाम् ।

गायत्रीं वरदाभयाङ्कुशकरां शुभ्रं कपालं गुणम्

शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

गायत्रीतन्त्रे प्रथमब्राह्मणपटले ।

"चतुर्भुजां शशिकलां जटाजूटसमन्विताम् ।
ऋक्सामयजुषां नाथां प्रफुल्लकमलेक्षणाम् ॥
पञ्चाशद्वर्णग्रथितां मालाद्योतितहृत्स्थलाम् ।
अनेकरत्ननिर्म्माणकण्ठदेशविराजिताम् ॥
दिव्यगन्धप्रलिप्ताङ्गीं शुक्लवस्त्रपरिष्कृताम् ।
शुक्लपद्मसमासीनां शुक्लवस्त्रोत्तरीयिणीम् ॥
ब्रह्मादिदेवतावृन्दैः संस्तुतां नित्यनूतनाम् ।
एवं ध्यात्वा न्यसेद्वर्णं पठित्वा छन्द उत्तमम् ॥

प्रातरादिकाले सन्ध्याङ्गगायत्रीध्यानभेदः काशीखण्डे

"गायत्रीमूषसि ध्यायेत् लोहितां ब्रह्मदैवताम् ।
हंसारूढामष्टवर्षां रक्तस्रगनुलेपनाम् ॥
ऋक्स्वरूपामभयदामक्षमालावलम्बिनीम् ।
व्यासर्षिणा स्तूयमानां छन्दसानुष्टुभा युताम् ॥
एतद्ध्यानादुषा देव्या नैशमेनोव्यपोहति" ।
"स्नात्वा माध्याह्निकीं सन्ध्यामुपासीत विचक्षणः ।
नवयौवनभिन्नाङ्गीं शुद्धस्फटिकनिर्म्मलाम् ।
त्रिष्टुप् छन्दः समायुक्तां गायत्रीं रुद्रदैवताम् ॥
काश्यपर्षिसमायुक्तां यजुर्वेदस्वरूपिणीम् ।
त्र्यक्षरीं वृषभारूढाम् भक्ताभयकरीं पराम् ॥"

सायमुपक्रम्य

"सामवेदस्वरूपां च वशिष्ठर्षिसमन्विताम् ।
कृष्णाङ्गीं कृष्णवसनां मनाक्स्खलितयौवनाम् ॥

सरस्वतीं तार्क्ष्ययानां विघ्नघ्नीं विष्णुदेवताम् ।
जगतीच्छन्दसायुक्तां ध्याये देकाक्षरां पराम् ॥"

एतच्च यजुर्वेदिविषयं सामवेदिनां मध्याह्न सायाह्नध्यानयोर्व्यास इति भेदः ।

गायत्रीतन्त्रे प्रथमब्राह्मणपटले ।

अस्याश्चग्निमुख्यागायत्र्याः परं ब्रह्म,ऋषिऋग्यजुसामाथर्वच्छन्दः सविता देवता परब्रह्म मातुर्न्यासे विनियोगः

"पादादिमस्तकान्तञ्च न्यासं कुर्य्याद्विशालधीः ।
विना न्यासं जपेद् यस्तु गायत्री विफला भवेत् ॥
विना मुद्रां न्यसेद् यस्तु न्यासो भवति निष्फलः ।
यतिस्तु पञ्चमुद्राभिर्न्यासं कुर्यात् प्रयत्नतः ॥
गृही च यत्नतः कुर्यात् त्रिसन्ध्यं तत्त्व २४ मुद्रया ।

( चतुर्विंशतिर्मुद्राश्च प्राक् दर्शिताः )

पञ्चमुद्रालक्षणमाह तत्रैव

"कनिष्ठानामिकाङ्गुष्ठा अङ्गुष्ठा तर्ज्जनी तथा ।
अङ्गुष्ठामध्यमाभ्याञ्च अङ्गुष्ठानामिका तथा ।
कनिष्ठाङ्गुष्ठसंयोगात् पञ्च मुद्राः प्रकीर्त्तिताः ॥
पादादिमस्तकान्तञ्च भूर्भुवः ! स्वर्न्यसेत् सुधीः ।
सप्तधा विन्यसेद्विद्वान् गायत्रीं क्रमयोगतः॥
पादाङ्गुष्ठे न्यसेद्योगी तकारं भावयेत्परम् ।
सकारं गुल्फयोर्मध्ये विकारं जङ्घयोस्तथा ॥
तुकारं जानुनोर्मध्ये वकारमूरुमध्यतः ।
रेकारं गुह्यदेशे च णिकारं (इरुच्चारणार्थः)वृषणे न्यसेत् ॥
यङ्कारं कटिदेशे च भकारं नाभिमण्डले ।

गौंकारं जठरे न्यस्येद्दकारं स्तनयोर्न्यसेत्

वकारं हृदि मध्ये च स्यकारं कण्ठतो न्यसेत्
धीकारं वदने भद्रे! मकारं तालुनि न्यसेत्
हिकारं नासिकाग्रे च धिकारं चक्षुषोर्न्यसेत्।
योकारं प्रथमं योगी भ्रुवोर्मध्ये च विन्यसेत्॥
द्वितीयञ्च ततोज्ञेयं ललाटे च न संशयः।
नःकारन्तु मुखे ज्ञेयं प्रकारं दक्षिणामुखम्॥
चोकारं पश्चिमे तद्वद्दकारं चोत्तरे तथा।
यात्कारं मूर्द्धि विज्ञेयं सर्वं व्याप्य स्थितं सदा॥"
गायत्रीतन्त्रे दशमब्राह्मणपटले।
"अधुना संप्रवक्ष्यामि गायत्र्याः पूजनं प्रिये!।
उपासितस्य मन्त्रस्य यथा पूजा विधीयते॥
गायत्र्याः पूजनं भद्रे! तथैव कथयामि ते।
शिवपूजा शक्तिपूजा विष्णुपूजादिका च या॥
सर्वा पूजा वृथा भद्रे! गायत्रीपूजनं विना।
पूजामण्डपमागत्य गायत्र्याचमनं चरेत्॥
गायत्र्याः प्रथमं वीजं पूजास्थाने न्यसेत् सुधीः
कुशासने चोपविश्य प्राणायामं समाचरेत्॥
पूरकादिक्रमेणैव गायत्र्याः प्राणधारणम्।
सामान्यार्घ्यं ततः कुर्य्यात् पूर्व्वोक्तक्रमवर्त्मना॥
गायत्रीं सकृदुच्चार्य्य ताम्रपात्रे जलं क्षिपेत्।
तीर्थमावाह्य यत्नेन गायत्रीं प्रजपेत्ततः॥
ततो धेन्वामृतीकृत्य प्रथमाष्टाक्षरेण वै।
द्वितीयाष्टाक्षरै विप्रो जलं वीक्ष्य प्रशान्तये॥

तृतीयाष्टाक्षरैर्देवि ! जलैरात्मविशोधनम् ।
अनेनैव विधानेन सृष्टिस्थितिलयात्मकम् ।
पूजनं परमेशानि ! तदेव फलदायकम् ॥
[यन्त्रन्यासध्यानादिकन्तु पूर्व्वमेव दर्शितम् ।]
"सौरं पीठं यजेत्तत्र दीप्तादिनवशक्तिभिः ।
तत्र—सर्वतो भद्रमण्डले । दीप्तादयः चतुर्द्दशपटले यथा
"दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः ।
अघोरा विद्युता सर्वतो मुखी पीठशक्तयः ॥
मूलमन्त्रेण क्लृप्तायां मूर्त्तौ देवीं प्रपूजयेत् ।
निर्व्वाणतन्त्रे
"जीवन्यासादिकं कृत्वा पूजयेत्तां त्रिवर्गदाम् ।
हालाहलादिकं (भूर्भुवःस्वः)मन्त्रं समस्तं परमेश्वरि ! ॥
समुच्चार्य्य ददेत्पाद्यं सावित्रीं ङेयुतां ततः ।
त्यागात्मकमनुं (नमः)पश्चात् यथा विभवविस्तरैः ॥
पूजयेद्बहुयत्नेन चान्यथाऽब्राह्मणः स्मृतः ।
शारदायाम्
"कोणेषु त्रिषु संपूज्याः ब्राह्म्याद्याः शक्तयो बहिः ।
आदित्याद्यास्ततः पूज्या उषादिसहिताः क्रमात् ॥
ततः षड़ङ्गान्यभ्यर्च्चेत् केशरेषु यथाविधि ।
प्रह्लादिनीं प्रभां पश्चात् नित्यां विश्वम्भरां पुनः ।
विलासिनीं प्रभावतीं जयां शान्तां यजेत् पुनः ॥
कान्तिं दुर्गासरस्वत्यौ विद्यारूपास्ततःपरम् ।
विशालासहि[illegible]ां व्यापिनीं विमलां यजेत् ॥
तमोऽपहारि[illegible]क्ष्मां विश्वयोनिं जयावहाम् ।

पद्मालयां परां शोभां पद्मरूपां ततोऽर्च्चयेत्
ब्राह्म्याद्याः सायुधा ब्राह्मि पूजयेत् प्रोक्तलक्षणाः
ततोऽभ्यर्च्चेद् ग्रहान् ब्राह्मि शक्रादीनायुधैः सह ॥
इत्थमावरणैर्देवान्दशभिः परिपूजयेत् ।
धर्मार्थकाममोक्षाणां भोक्ता स्याद् द्विजसत्तम ॥"
निर्वाणतन्त्रे
"द्रव्याभावे पाद्याद्यैरुदकात्मकैः ।
पूजयित्वा वों गायत्रीं परमाक्षरीम् ॥"
एतेन द्रव्या आदिना पूजायां कर्त्तव्यायामपि
एतत् पाद्यमित्य मलएव स्मृतिः
"तैलं प्रति द् घृतार्थे याज्ञिको यदि ।
प्रकृत्यैव तदा नाह। वृथाद्दुष्टतवतीमिति ॥"
जपफलमपि निर्वाणतन्त्रे
"दशभिर्ज्जन्मजनितं शतेनापि पुराकृतम् ।
त्रिजन्मजं सहस्रेण गायत्री हन्ति पातकम् ॥"
जपे तु विशेष उक्तो गायत्रीतन्त्रे ।
'गायत्र्या पुटितं कृत्वा इष्टमन्त्रं जपेत् शतम ।
इष्टमन्त्रेण पुटितं गायत्रीं प्रजपेत् शतम्' ॥
एतज्जपं महेशानि ! आधाराधेयमुत्तमम् ।
विनाधारं महेशानि ! आधेयेन विना तथा ॥
नाधारं सिध्यते भद्रे ! आधेयञ्च न सिद्ध्यति ।
सर्वेषु विष्णुमन्त्रेषु सौरे गाणपतौ तथा ॥
आधाराधेयभावस्तु सर्वत्र वरवर्णिनि ! ।
साञ्जनात् लोचनाद् यस्तु झटिति प्रविशेद्गृहम् ॥

न पश्येच्चक्षुषा किञ्चित् गृहमध्येषु यत्स्थितम्

एवमाधारमाधेयं यः करोति द्विजातिकः ॥
अक्षरो जायते भद्रे ! तज्जापान्न संशयः ।
न च जीवात्मनोर्भिन्ना गायत्री ब्रह्मरूपिणी ॥
गायत्री न हि भिन्ना स्याज्जीवात्मा तत्स्वरूपयुक् ।
सर्वदा उभयोरैक्यं नारिकेले यथोदकम् ॥
द्विजातिः कथ्यते देवभाव एव हि ब्राह्मणः ।
यथा स्पर्शमणिस्पर्शात् ताम्रोऽपि काञ्चनं सदा ॥
गायत्रीसहितो ह्यात्मा द्विजात्मा तेन ईरितः"।

गायत्रीतन्त्रे

"जपेत् सूर्य्यमुखोनित्यं नास्ति दिङ्नियमः क्वचित् ।
गायत्रीं प्रजपेन्नित्यं त्रिसन्ध्यं नात्र संशयः ॥
अशौचे तु महेशानि ! गायत्रीं मनसा स्मरेत् ।
गायत्री बहुरूपा च त्रिसन्ध्याध्यानमेव च ॥
'ओं महेश्वरवदनोत्पन्ना विष्णोर्हृदय संस्थिता ।
ब्रह्मणा समनुज्ञाता गच्छ देवि ! यथेच्छया ॥
इति मन्त्रं समुच्चार्य्य देव्या वामकरे बुधः ।
समर्पयेज्जपफलं ततः स्तोत्रादिकं पठेत् ॥"
जपादौ जपशेषे च गायत्रीकवचं पठेत् ।

तत् कवचं यथा तत्रैव

"श्रीदेव्युवाच ॥ देवदेव ! महादेव ! संसारार्णवतारक
गायत्रीकवचं देव ! कृपया कथय प्रभो ! ॥

श्रीदेवदेव उवाच ॥

मूलाधारेषु या नित्या कुण्डली तत्त्वरूपिणी ।

सूक्ष्मातिसूक्ष्मा परमा विषतन्तुस्वरूपिणी ॥
विद्युत्पुञ्जप्रतीकाशा कुण्डलाकृतिरूपिणी ।
परमब्रह्मगृहिणी पञ्चाशद्वर्णरूपिणी ॥
शिवस्य नर्त्तकी नित्या परब्रह्मप्रपूजिता ।
ब्राह्मणस्यैव गायत्री सच्चिदानन्दरूपिणी ॥
तद्भ्रमावर्त्तवातोऽयं प्राणात्मा नित्यनूतनः ।
नित्यं तिष्ठति सानन्दा कुण्डली भवविग्रहे ॥
अतिगोप्यं महत् पुण्यं त्रिकोटीतीर्थसंयुतम् ।
सर्वयज्ञमयं देवि ! सर्वदानमयं सदा ॥
सर्वज्ञानमयं देवि ! परब्रह्ममयं सदा ।
कवचं कथयाम्यद्य पार्वति ! प्राणवल्लभे ! ॥
ओं भूः ओं पातु मे मूलं चतुर्द्दलसमन्वितम् ।
ओं भुवः ओं पातु मे लिङ्गं षड्दलकान्वितम् ॥
ओं स्वः ओं पातु मे कण्ठमाकाशं दलषोडशम् ।
ओं त ओं पातु मे रूपं ब्रह्मण्यकारणं परम् ॥
ओंत्स ओं वदनं पातु रसनासंयुतं मम ।
ओं वि ओं पातु मे गन्धं सदा शरीरसंयुतम् ॥
ओं तु ओं पातु मे स्पर्शं शरीरस्य च कारणम् ।
ओं र्व ओं पातु मे शब्दं शब्दविग्रहकारणम् ॥
ओं रे ओं पातु मे नित्यं त्वचं शरीररक्षिणीम् ।
ओं णि ओं पातु मे अक्षि सर्वतत्त्वैककारणम् ॥
ओं यं ओं पातु मे श्रोत्रं श्रवणस्य च कारणम् ।
ओं भ ओं पातु मे घ्राणं गन्धोपादानकारणम् ॥
ओं र्गो ओं पातु मे वाक्यं सभायां शब्दरूपधृक्

ओं दे ओं पातु मे बाहुयुगलं ब्रह्मकारणम् ॥
ओं व ओं पातु मे पादयुगलं ब्रह्मकारणम्
ओं स्य ओं पातु मे लिङ्गं सजलं षड्दलैर्युतम् ॥
ओं धी ओं पातु मे नित्यं प्रकृतिं शब्दकारणम् ।
ओं म ओं पातु मे नित्यं मनो ब्रह्मस्वरूपधृक्॥
ओं हि ओं पातु मे बुद्धिं परब्रह्ममयं सदा ।
ओं धि ओं पातु मे नित्यमहङ्कारं यथा तथा ॥
ओं यो ओं पातु मे नित्यं पृथिवीं पार्थिवं वपुः ।
ओं यो ओं पातु मे नित्यं जलं सर्वत्र सर्वदा ॥
ओं नः ओं पातु मे नित्यं तेजःपुञ्जं यथा तथा ।
ओं प्र ओं पातु मे नित्यमनिलं देहकारणम् ॥
ओं चो ओं पातु मे नित्यमाकाशं शशिसन्निभम् ।
ओं द ओं पातु मे जिह्वां जपयज्ञस्य कारणम् ॥
ओं यात् ओं पातु मे चित्तं शिवज्ञानमयं सदा ।
ओं तत्त्वानि पातु मे नित्यं गायत्रीपरदेवता ॥
ओं भूर्भुवः स्वः पातु मे नित्यं ब्रह्माणी जठरं क्षुधा ।
त्वष्टौ मे सततं पातु ब्रह्माणी भूर्भुवः स्वरः ॥"

अस्याः श्रग्निमुख्या श्रीगायत्र्याः परंब्रह्म ऋषि ऋग्यजु सामाथर्वश्छन्दांसि श्रीगायत्री ब्रह्माणी देवता धर्मार्थकाम-मोक्षार्थे विनियोगः । ततो गायत्रीं पठेत् ।

"कामक्रोधादिकं सर्वं स्मरणाद् याति साम्यताम् ।
इदं कवचमज्ञात्वा गायत्रीं प्रजपेद् यदि ॥
शतकोटिजपेनैव न सिद्धिर्जायते प्रिये ! ।

गायत्रीवाचनात् सर्वं स्मरणं सिद्ध्यति ध्रुवम् ॥
पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत् ।
सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्द्विजः ॥
इदं कवचमज्ञात्वा कवचान्यन्तु पठेत्तु यः ।
सर्वं तस्य वृथा देवि ! त्रैलोक्यमङ्गलादिकम् ॥
गायत्रीकवचं यस्य जिह्वायां विद्यते सदा ।
तदामृतमयी जिह्वा पवित्रा जपपूजने ॥
इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद् यदि ।
व्यर्थं भवति चार्वङ्गि ! तज्जपं वनरोदनम् ॥
ब्रह्महत्या सुरापाणं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकानीह स्मरणान्नाशमाप्नुयुः ॥
त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्रविनिर्म्मितम् ।
वातपित्तकफैर्युक्तं स्थूलदेहं तदुच्यते ॥
सूक्ष्मं ज्योतिर्म्मयं देहं पञ्चभूतात्मकं विदुः ।
महापद्मवनान्तःस्थं सर्वावयवसंयुतम् ॥
आधाराधेयसम्बन्धात् गायत्री ब्राह्मणः स्वयम्
अत एव परं ब्रह्म कथ्यते चोभयात्मकम् ॥
ब्राह्मणस्यैव जीवात्मा गायत्रीसहितं वपुः ।
आत्मनोहृदयाम्भोजे प्रदीपकलिकोपमम् ॥
निर्धूमञ्च यथा ज्योतिस्तैलाग्निवर्त्तियोगतः ।
तज्ज्योतिः परमं ब्रह्म स एव परमः शिवः ॥
गायत्रीकवचन्यासं मातृकास्थानसन्धिषु ।
यः कृत्वा ब्राह्मणश्रेष्ठो ह्यन्यन्यासं समाचरेत् ॥

अन्यन्यासस्तदा सिद्धो ह्यन्यथाऽरण्यरोदनम् ।
गायत्रीन्यासमात्रेण परं ब्रह्ममयो द्विजः ॥
इदं कवचमज्ञात्वा ब्रह्मचर्य्यं करोति यः ।
ब्रह्मचर्य्यं भवेद्व्यर्थं गायत्रीकवचं विना ॥
कवचस्य प्रसादेन ब्राह्मणोज्वलदग्निवत् ।
कवचं परमेशानि ! सृष्टिस्थितिलयात्मकम् ॥
कवचस्य प्रसादेन ब्रह्मा सृष्टिं करोति हि ।
स्थितिञ्चकुरुते विष्णू रुद्रोऽहं लयकारणम् ॥
अन्यद्धि कवचं देवि ! सृष्टिस्थितिलयं विना ।
इदमेव ब्रह्ममयं सृष्टिस्थितिलयात्मकम् ॥
कवचं ब्राह्मणो नाम प्रातरुत्थाय यः पठेत् ।
गायत्रीञ्च सकृत् स्मृत्वा जपलक्षफलं लभेत् ॥
गायत्रीं दशधा जप्त्वा दशलक्षफलं लभेत् ।
एवं क्रमेण गायत्रीं शतधा प्रजपेद्यदि ॥
शतलक्षफलं प्राप्य विहरेद्देववद्भुवि ।
ग्रहणे चन्द्रसूर्य्यस्य पठित्वा कवचं द्विजः ॥
सकृद् यदि जपेद्विद्वान् गायत्रीं परमाक्षरीम् ।
तत्क्षणात् स भवेत् सिद्धो ब्रह्मसायुज्यमाप्नुयात् ॥
इदं कवचमज्ञात्वा गायत्रीं प्रजपेत्तु यः ।
जप एव सएव स्यान्निस्तेजाश्च सिद्धिदः ॥
यःपठेत् कवचं देवि ! सततं शिवसन्निधौ ।
सन्निधौ विष्णुदेवस्य कवचं शक्तिसन्निधौ ॥
तेजःपुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम् ।

इत्यागमसन्दर्भे ज्ञानदर्पणे गायत्री ब्राह्मणसर्व्वस्वे देवदेवीसंवादे गायत्रीकवचं समाप्तम्॥ कवचान्तरमन्यत्र द्रष्टव्यम्।

अथास्याः पुरश्चरणं शारदायाम्।

लक्षतत्त्वविधानेन भिक्षाशी विजितेन्द्रियः॥

क्षीरौदनं तिलान् दूर्व्वां क्षीरद्रुमसमिद्वरान्।

पृथक्सहस्रत्रितयं जुहुयान्मन्त्रसिद्धये॥

लक्षतत्त्वविधानेनेत्यनेन चतुर्व्विंशतिलक्षं पुरश्चरणमुक्तं तस्य विधानेन पुरश्चरणोक्तविधानेन। क्षीरौदनमिति क्षीरमोदनं तिलादूर्व्वाश्चेतिद्रव्यचतुष्टयं"क्षीरद्रुमेति अश्वत्थोडुम्बरप्लक्षवटा इतिद्रव्यचतुष्टयम्। पृथक्सहस्रत्रितयमिति अष्टाभिर्द्रव्यैः पृथक् सहस्रत्रितयमित्यर्थस्तेन चतुर्विंशति सहस्र होमः।

निर्व्वाणतन्त्रे तु।

"विधिवल्लक्षजापेन पुरश्चरणमीरितम्॥

तद्दशांशं हुनेत् पश्चात् पुरश्चरणसिद्धये।

होमस्य तु दशांशेन तर्पणं समुदीरितम्॥

तर्पणस्य दशांशेन चाभिषेकं ततः परम्।

अभिषेकदशांशेन कुर्य्याद्ब्राह्मणभोजनम्॥

'ततः सिद्धोभवेद्देवि! त्रिवर्गफलभाजनम्।

माहात्म्यं चास्य मन्त्रस्य चतुर्व्वेदेन भाषितम्"॥

अथकाम्यकर्म्माणि शारदायाम्।

"तत्त्वसंख्यसहस्राणि मन्त्रविज्जुहुयात्तिलैः।

सर्व्वपाप विनिर्मुक्तो दीर्घमायुःस विन्दति।

आयुषे साज्यहविषा केवलेनाथ सर्पिषा ।
दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयात् त्रिसहस्रकम् ।
अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ।
महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥
ब्रह्मश्रियै प्रजुहुयात् प्रसूनैर्ब्रह्मवृक्षजैः ।
बहुना किमिहोक्तेन यथावत् साधु साधिता ।
द्विजन्मनामियं विद्या सिद्धिकामदुघा मता" ।
वात्स्यवंशावतंसस्य कालिदासविदः सुतः ।
श्रीतारानाथशर्म्मेमं गायत्र्यर्थं व्यदर्शयत् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य
सङ्कलितो गायत्र्यर्थः समाप्तः शिवम् ।

श्रीतत्सत् ।

शाके पञ्चाङ्गवाहेन्दुमिते संवत्सरे शुचौ ।
मासेऽस्मै मुद्रितो ग्रन्थो भूयात्तत् पाठिनां शुभम् ॥